उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतसाहित्यम् - ३४८

## पुस्तकम् - ३

विद्याधनम् सर्वधनं प्रधानम्


**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in  निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - संस्कृतसाहित्यम् (३४८)

## मन्त्रणामण्डलम्


**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यविषय-निर्मिति-समितिः


**समितेः अध्यक्षः**
**स्वामी आत्मप्रियानन्दः**
कुलपतिः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**समितेः उपाध्यक्षः**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. शशी-प्रभा-कुमारः**
प्राध्यापिका (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः, इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**डॉ. भास्करानन्द-पाण्डेयः**
उपप्राचार्यचरः
सर्वोदय-बाल-विद्यालयः, नवदेहली

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम्- राणीबाँध, मण्डलम्- बाँकुडा- ७२२१३५(प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्, नोएडा - २०१ ३०९


## पाठ्यक्रम-समन्वयकः


**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् , नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १, २०-२६)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २-७)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः ८-१९)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S)
(संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः २७)**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः
संस्कृताध्ययनविभागः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतसाहित्यस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतसाहित्यस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**<br>
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**<br>
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**<br>
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**<br>
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**<br>
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा<br>
निदेशकः (शैक्षिकम्)<br>
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य उच्चतरमाध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

काव्यस्य काव्यशास्त्रस्य च परमं फलम् भवति रसः इति विदुषाम् अभिप्रायः अनुभवश्च समेषाम्। आनन्दो हि रसस्वरूपम्। सर्वेषाम् प्राणिनाम् सर्वं कार्यम् आनन्दे सुखे वा पर्यवस्यतु इतीच्छा सर्वप्रबला। तथा काव्यस्य सर्वे विषयाः रसे पर्यवस्यन्ति। काव्यानां नैके प्रकाराः सन्ति। काव्यप्रपञ्चः च अति महान्। बहूनि च काव्यानि सन्ति। तेषु विविधानां काव्यांशानां चयनं कृत्वा अत्र पाठ्यत्वेन योजना कृता। एवञ्च ईदृक् रसस्यन्दीनि काव्यानि ये रचयतन्ति ते प्रतिभाशालिनः कवयः के इति तत्परिचयः भविष्यति। येन केनापि यत् किमपि लिखितं चेत् काव्यं न भवति। तस्य नियमाः सन्ति। ते च नियमाः काव्यशास्त्रे अन्तर्भवन्ति। नियमनिर्णायकाः अलंकारिकाः के इति तत्परिचयः अत्र स्यात्। तत्कृता नियमाश्च के इति सविस्तरं विषयः अत्र कावदर्पणः इति नाम्ना प्रकटितोऽस्ति। पारम्परिकगुरुकुलेषु यया पद्धत्या पाठः प्रदीयते तस्य अवलम्बः यथासम्बवमत्र प्रतिपादने कृतो विद्यते।

उच्चतरमाध्यमिककक्षायां प्रदत्तः संस्कृतसाहित्यम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः अस्य अध्ययनेन ज्ञानपीनः आनन्दाप्लुतः च भवेत्। अस्य पठनेन अध्येता अन्येषु काव्येषु प्रवेशाय योग्यो विधास्यते। एतत्सामग्री काव्यानां काव्यशास्त्रस्य च सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

राम-नारायण-मीणा

पाठ्यक्रमसमन्वयकः (शैक्षिकम्)

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

# पुस्तकम्- १

## कविपरिचयः

१. कविपरिचयः- १

२. कविपरिचयः- २

३. कविपरिचयः- ३

## काव्याध्ययनम् - १

## रघुवंशम् (प्रथमसर्गे १-४८ श्लोकाः)

४. रघुवंशम् - रघुवंशीयनृपाणां गुणवर्णनम्

५. रघुवंशम् - राज्ञो दिलीपस्य गुणवर्णनम्- १

६. रघुवंशम् - राज्ञो दिलीपस्य गुणवर्णनम्- २

७. रघुवंशम् - वशिष्ठाश्रमे गमनम्

## स्तोत्रसाहित्यम्

८. मोहमुद्गरः रामगुणकीर्तनं च

## गद्यकाव्यम्

९. शिवराजविजयः - बटुसंवादः

१०. शिवराजविजयः - योगीराजसंवादः

११. शिवराजविजयः - यवनदुराचारः

# पुस्तकम्- २

## काव्याध्ययनम् - २

## उत्तररामचरितम् (प्रथमोऽङ्कः)

१२. उत्तररामचरितम् - प्रस्तावना

१३. उत्तररामचरितम् - अष्टावक्रसंवादः

१४. उत्तररामचरितम् - चित्रदर्शनम् - १

१५. उत्तररामचरितम् - चित्रदर्शनम् - २

## शुकनासोपदेशः

१६. शुकनासोपदेशः - यौवनस्वभावः

१७. शुकनासोपदेशः - लक्ष्मीचापल्यम्

१८. शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः-१

१९. शुकनासोपदेशः - लक्ष्मीदुष्प्रभावः-२

# पुस्तकम्- ३

## काव्यदर्पणः

२०. आलंकारिकपरिचयः -१

२१. आलंकारिकपरिचयः -२

२२. वृत्तिपरिचयः

२३. छन्दसां मात्रागणयतिभेदाः

२४. छन्दांसि

२५. शब्दार्थालङ्कारः शब्दालंकारश्च

२६. अर्थालंकारः

२७. रसपरिचयः

# संस्कृतसाहित्यम्

# उच्चतरमाध्यमिककक्षा

## तृतीयं पर्व

| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|
| | **काव्यदर्पणः** | |
| २०. | आलंकारिकपरिचयः -१ | १ |
| २१. | आलंकारिकपरिचयः -२ | १६ |
| २२. | वृत्तिपरिचयः | ३२ |
| २३. | छन्दसां मात्रागणयतिभेदाः | ५५ |
| २४. | छन्दांसि | ७२ |
| २५. | शब्दार्थालङ्कारः शब्दालंकारश्च | ९० |
| २६. | अर्थालंकारः | १०६ |
| २७ | रसपरिचयः | १२१ |
| | पाठ्यक्रमस्य विवरणम् | |
| | प्रश्नपत्रस्य प्रारूपम् | |
| | प्रश्नपत्रप्रतिमा | |
| | प्रश्नपत्रप्रतिमाया उत्तरमाला | |

# २०

# आलंकारिकपरिचयः-१

## प्रस्तावना

आधुनिकेषु सर्वप्रथमः अलङ्कारशास्त्रग्रन्थः भामहप्रणीतः काव्यालङ्कारः इति। अत एव अस्य शास्त्रस्य अलङ्कारशास्त्रनाम्ना प्रसिद्धिः। काव्यशास्त्रस्य वास्तविकं नाम अलङ्कारशास्त्रम्। तच्च अलङ्कारशास्त्रं काव्यस्य दर्शनशास्त्रम्। अलङ्कार इति पदे अलम्, कार इति पदद्वयम् अस्ति। "अक्षरं परमं ब्रह्म सनातनमलं विभुम्... वदन्ति" इति अग्निपुराणवचनानुसारेण अलम् इत्यस्य अर्थः परब्रह्म। अत एव अलङ्कारशास्त्रस्य अर्थः भवति ब्रह्मविद्याशास्त्रम्। कटककुण्डलादयः यथा शरीरस्य शोभां वर्धयन्ति तथैव अलङ्कारः अपि शब्दार्थमयस्य काव्यशरीरस्य शोभां वर्धयति। साधारणतया अलङ्कार इत्युक्ते शोभासम्पादक उपकरणविशेषः। अर्थात् अलङ्कारः सौन्दर्यपदवाच्यो भवति इति वामनस्य मतम्। यथा शरीरात् लावण्यं पृथक् न भवति तथा शब्दार्थमयात् काव्यशरीरात् अपि सौन्दर्यं पृथक् न भवति। काव्यस्य स्वरूपविषये उपादानविषये च आलङ्कारिकाणां मतवैसादृश्यं भवति। केचित् अलङ्कारम्, केचित् रीतिम्, केचित् रसम्, केचित् ध्वनिम्, केचित् वक्रोक्तिञ्च काव्यस्य प्राणभूतेन अङ्गीकृतवन्तः। पुराकाले आलङ्कारिकाः स्वपरिचयविषये स्वकीयग्रन्थे न किमपि लिखन्ति स्म। तस्माद् आलङ्कारिकाणां देशकालकृतिविषये पण्डितानां मतपार्थक्यं भूयशो दृश्यते। विविधेषु ग्रन्थेषु स्थितानि उद्धृतवाक्यानि परिपश्य प्राचीनालङ्कारिकाणां देशकालवंशपरिचयादीनाम् अनुमानं क्रियते। आलङ्कारिकाणां परम्पराविषयं देशकालकृतिं च समाश्रित्य पाठोऽयम्।

## उद्देश्यानि

पाठस्यास्याध्ययनेन-

- आलङ्कारिकाणां विषये ज्ञानं भवेत्।
- आलङ्कारिकः तस्य देशः कालः कृतयः इति विषये ज्ञानं भवेत्।
- आलङ्कारिकस्य वंशविषयकं ज्ञानं भवेत्।
- कः आलङ्कारिकः कस्य सम्प्रदायस्य प्रवर्त्तकः इति ज्ञानं प्रभवेत्।

## २०.१) भरतः

प्राचीनेषु आलङ्कारिकेषु नाट्यशास्त्रस्य प्रणेता महर्षिः भरतः अन्यतमः भवति। रससम्प्रदायस्य जनकः भरतमुनिः। तदीयम् - "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति सूत्रमेव



रससस्वरूपनिर्णायकेषु आदिमं प्रसिद्धम्। भरतमुनिः काव्ये रसस्य प्राधान्यं स्वीकृतवान्। अत एव आह — "न हि रसादृते कश्चिदर्थः प्रवर्तते" इति। अलङ्कारशास्त्रे नाट्याधिकरणम् अधिकृत्य द्वौ भरतौ उपस्थाप्येते। वृद्धभरतो भरतमुनिः च। सामान्यतस्तु मनुयाज्ञवल्क्यादीनां नामसु अपि वृद्धविशेषणं प्रयुङ्क्ते। तथैव भरतेन सहापि व्यवहृतं स्यात्। कथ्यते नाट्यशास्त्रं हि मूलतो द्वादशसाहस्री संहिता आसीत्। तस्य प्रणेता वृद्धभरतशब्देन संकेतितः भवति। भरतनामसम्बद्धं नाट्यशास्त्रं शतसाहस्री कृतिः मन्यते। भरतः स्वकीये नाट्यशास्त्रग्रन्थे स्वकीयपरिचयं न किम् अपि प्रदत्तवान्। अतः रससम्प्रदायकस्य जनकस्य महामुनेः भरतस्य देशकालादिविषये विदुषां मतवैसादृश्यं भूयशः परिलक्ष्यते।

**देशः**- प्राचीनशास्त्रकारैः स्वकीये ग्रन्थे स्वविषये किम् अपि न लिख्यते। तस्मात् भरतमुनेः अपि देशविषये न कुत्रापि किम् अपि प्राप्यते। अत एव विदुषां तु भरतमुनेः देशविषये मतवैसादृश्यम् अस्ति। प्रायः पुस्तके भरतमुनेः वासस्थानविषये न किमपि लिखति। केषाञ्चन मते तु काश्मीरवासी भरतमुनिः। केषाञ्चन मते तु उत्तरभारतीयः भरतमुनिः।

**कालः** - पौराणिकवंशक्रमानुसारेण भरतो व्यासवाल्मीकिभ्यां पश्चाद्वर्ती भवन् अपि इतरेभ्यः समेभ्यः संस्कृतभाषायां लेखकेभ्यः प्राचीनः प्रतीयते। भरतकृतस्य नाट्यशास्त्रस्य राहुलककृता टीका अभिनवगुप्तेन स्मर्यते। राहुलकस्य नाम तामिलमहाकाव्ये मणिमेकलये समायातम्। मणिमेकलये नामकस्य तस्य तामिलग्रन्थस्य रचनाकालः चतुर्थः ई. पू. मन्यते, अतो भरतस्य तत्पूर्वकालिकता समायाति। कालिदासोऽपि भरतं स्मरति। अतः कालिदासात् पूर्ववर्ती भरतमुनिः अयम्। अपरञ्च म्याकडोनेलमहोदयस्य मते तु भरतमुनिः षष्ठशताब्दीयः आलङ्कारिकः। महामहोपाध्यायस्य हरप्रसादशास्त्रिमहोदयस्य मते भरतमुनेः कालः द्वितीयशताब्दी। कालिदासस्य विक्रमोर्वशीये नाटके भरतमुनेः नाम प्राप्यते। एतेन ज्ञायते अष्टमशताब्द्याः पूर्वं नाट्यशास्त्रं प्रसिद्धम् आसीत्। अतः भरतमुनेः स्थितिकालः चतुर्थशतकात् पूर्वं मन्यते।

**कृतिः**- सम्प्रति उपलभ्यमानं नाट्यशास्त्रं भरतस्य कृतिः। इदं क्वचित् ३६ अध्यायात्मकम्, क्वचित् ३७ अध्यायात्मकं कथ्यते। मन्ये लेखकप्रमादात् कोऽपि अध्यायः विभक्तः स्यात्। अभिनवगुप्तः स्वीयायां भरतसूत्रस्य टीकायां सप्तत्रिंशतः अध्यायान् लिखति। प्रति अध्यायस्य प्रारम्भावसरे श्लोकम् एकम् शिवनमस्कारात्मकं लिखति, येन काश्मीरकशैवप्रत्यभिज्ञाशास्त्रीयषट्त्रिंशत्तत्त्वानि निदर्शितानि भवन्ति। इदम् अपि सम्भवति यत् अभिनवगुप्त एव तत्त्वानि अनुत्तरं च निर्देष्टुम् इच्छुः कमपि अध्यायं विभज्य अध्यायसंख्यां वर्धितवान्। प्राप्ते भरतसूत्रे ५००० श्लोकाः सन्ति। तथा कियद्गद्यमपि विद्यते। षष्ठसप्तमाष्टाविंशतितमाध्यायेषु केवलं गद्यभाग एव अस्ति। इतिहासविदः कथयन्ति यत् नाट्यशास्त्रं न एकस्मिन् काले रचितम् अपि तु दीर्घकालिकस्य साहित्यतत्त्वनिर्णयप्रयासस्य फलम् इदम् शास्त्रम्। नाट्यशास्त्रे त्रयः अंशाः विद्यन्ते- १. सूत्रं भाष्यम् च, अयमंशः प्राचीनतमः २. कारिका, मूलाभिप्रायं बोधयितुं कारिका रचिता ३. अनुवंश्यश्लोकाः, इमे श्लोकाः भरतादपि प्राचीनैः आचार्यैः रचिताः सन्ति। स्वमतं प्रमाणयितुं भरतेन अपि इमे श्लोकाः उपन्यस्ताः सन्ति। अत एव आह अभिनवगुप्तः- “ता एता ह्यार्या एकप्रघट्टकतया, पूर्वाचार्यैर्लक्षणत्वेन पठिता, मुनिना तु सुखसंग्रहाय यथास्थानं निवेशिताः” इति।

रससम्प्रदायकस्य प्रवर्तकः अयं भरतमुनिः। तदीयम्- “विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः” इति सूत्रमेव रससिद्धान्तं प्रतिपादयति। भरतमुनेः मते तु काव्ये रसः एव प्रधानः भवति। रसं विना न कदापि काव्यं सम्भवति। इतः परं विश्वनाथः अपि काव्ये रसस्य प्राधान्यतां स्वीकृतवान्। भरतमुनिः रससम्प्रदायस्य आदिमः आचार्यः भवति। भरतेन स्वीयनाट्यशास्त्रस्य षष्ठे सप्तमे चाध्याये रसस्य विषये स्वमतं प्रकाशितम्।

## पाठगतप्रश्नाः-१

केचित् प्रश्नाः अधः प्रदीयन्ते-

१. रससम्प्रदायस्य प्रवर्तकः कः।

२. नाट्यशास्त्रस्य प्रणेता कः।

३. नाट्यशास्त्रस्य कस्मिन् कस्मिन् अध्याये रसस्य उल्लेखः लभ्यते।

४. नाट्यशास्त्रे कति अध्यायाः सन्ति।

५. भरतमुनेः कालः कः।

६. नाट्यशास्त्रे कति श्लोकाः सन्ति।

## २०.२) भामहः

महर्षेः भरतात् परं प्राचीनेषु आलङ्कारिकेषु अन्यतमः भामहः आसीत्। अलङ्कारसम्प्रदायः भामहेन प्रवर्तितः। तस्य मते- “काव्यं ग्राह्यमलङ्कारात्”इति। अलङ्कारहीनं वनितावदनं यथा असुन्दरं तथैव शब्दार्थमयं निरलङ्कारं काव्यशरीरम् असुन्दरम्। अत एव आह- “न कान्तमपि निभूषं विभाति वनितानन‌म्”इति। भामहस्य मते तु काव्ये अलङ्कारः एव प्रधानो भवति। इदमेव मतं प्रमाणयितुं भामहः काव्यालङ्कारग्रन्थं लिखितवान्।

**वंशपरिचयः** - भामहः रक्रिलगोमिनः पुत्रः आसीत्। गोमिनपदं बौद्धेषु प्रयुज्यते, यथा चन्द्रगोमीत्यादि, अतोऽयं बौद्ध इति। अपरञ्च स्वीयस्य काव्यालङ्कारस्य प्रारम्भे अयं भामहः सार्वसर्वज्ञस्य स्तुतिं कृतवान्, अतः अयं बौद्धः इति बहुभिः सन्दिह्यते। वस्तुतस्तु अयं हिन्दुधर्मावलम्बी आसीत्। यतो हि यागादीनां सोमपानस्य च रामायणीयपात्राणां च प्रशंसां कृतवान्। न एतावत् अस्ति। भामहः अपोहवादस्य आलोचनं कृतवान्। अतः अयं भामहः हिन्दुधर्मावलम्बी आसीत्।

**देशः**- भामहस्य देशः काश्मीरः भवति। काश्मीरदेशवासी अयं भामहः इति सर्वैः पण्डितैः अङ्गीकृतम्।

**कालः**- भामहस्य समयः कः इति अस्मिन् विषये महान् मतभेदो भवति। भामहस्य स्थितिकालश्च सर्वाधिकविवादविषयः। सम्प्रति अपि अनिर्णीतः अस्ति। भामहदण्डिनोः पौवापर्यम्

आदाय अपि पण्डिताः विवदन्ते। केचित् भामहं दण्डिपूर्ववर्तिनं मन्यन्ते। अपरे तु तद्विपरीतम् एव। सौभाग्येन अधुना दण्डी भामहात् परवर्त्ती स्वीकृत एव, अतो यदि दण्डी सप्तमशतकप्रारम्भकालिकः तदा अयं भामहः षष्ठशतकवर्त्ती इति वक्तव्यम्।

अष्टमशतकोत्पन्नः भट्टोद्भटः भामहकृतं काव्यालङ्कारं व्याख्यातवान्। अतः भामहः तत्पूर्वकालिकः भवति। एतेन आगतं यत् भामहस्य कालः अष्टमशतकात् पूर्ववर्त्ती।।

भामहो हि भासं समीक्षते, कालिदासो हि भासं स्मरति, भामहस्तु कालिदासं न स्मरति। अतः भामहः भासकालिदासयोः अन्तर्वर्तिकालिकः। एतेन अपि आगतं यत् भामहस्य कालः षष्ठशतकम्।

केचन पाश्चात्याः विद्वांसः भामहकृतौ न्यासपदप्रयोगं दृष्ट्वा भामहं जिनेन्द्रबुद्धेः न्यासकारात् परवर्त्तिनं मत्वा सप्तमशतकपरवर्तित्वम् आतिष्ठन्ते। परन्तु मतम् इदम् निर्मूलम्। यतो हि जिनेन्द्रबुद्धिभिन्नस्य न्यासग्रन्थकारस्य भामहेन स्मरणं कृतम्। धर्मकीर्ति-दिङ्नागयोः मध्यकालिकः भामहः इति तदीयप्रत्यक्षलक्षणं दृष्ट्वा कथयन्तः अपि षष्ठशतकमध्यवर्तित्वम् आहुः। सप्तमशतकस्थभट्टिना भामहस्य श्लोकः अनुकृतः। अतः षष्ठशतकात् पूर्ववर्त्ती भामहः।

**कृतिः-** भामहः काव्यालङ्कारः इति नाम्ना एकं ग्रन्थं रचितवान्। वृत्तरत्नाकरे भामहनाम्ना केचित् श्लोकाः सन्ति। भामहः एकं छन्दोग्रन्थम् अपि लिखितवान् इति केचित्। परन्तु छन्दोग्रन्थस्तु सम्प्रति न उपलभ्यते। काव्यालङ्कारे षट् परिच्छेदाः सन्ति। प्रथमे परिच्छेदे काव्यसाधनतल्लक्षणतद्भेदाः वर्णिताः। द्वितीये तृतीये च परिच्छेदे अलङ्काराः आलोचिताः। चतुर्थे परिच्छेदे भरतोक्ताः दश दोषाः वर्णिताः। पञ्चमे न्यायविरोधिदोषाः वर्णिताः। षष्ठे विवादास्पदपदशुद्धिः विचारिता। प्रायः काव्यालङ्कारग्रन्थे ४०० श्लोकाः सन्ति। भरताद् अनन्तरम् अयम् एव ग्रन्थः अलङ्कारशास्त्रस्य सर्वमान्यः भवति। एतत्पूर्ववर्तितया मेधाविरुद्रस्य एकः ग्रन्थः आसीत्। परन्तु सः ग्रन्थः इदानीं नैव प्राप्यते। काव्यालङ्कारे शब्दार्थयुगलस्य काव्यत्वम्, भरतेन उक्तानां दशगुणानां माधुर्यौजप्रसादेषु अन्तर्भावः, वक्रोक्तेः सकलालङ्कारमूलत्वम् इति विशिष्टसिद्धान्ताः। भामहः रसं काव्यमूलत्वेन न स्वीकरोति। काव्यस्य प्राणस्वरूपत्वेन अलङ्कारम् एव स्वीकरोति। परन्तु भामहस्य मते सर्वः अपि अलङ्कारः वक्रोक्तिमूलकः भवति। अत एव प्राह – "सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते" इति। परवर्तिकाले वक्रोक्तिः पृथक् अलङ्कारः भवति। भामहस्य एव वक्रोक्तिम् आश्रित्य कुन्तकेन वक्रोक्तिजीवितम् इति ग्रन्थः रचितः। भामहः पृथक्तया रसं न स्वीकृतवान्। तथापि रसवत् अलङ्कारः भवति इति स्वीकृतवान्। अप्रस्तुतप्रशंसा वक्रोक्तिः इत्याद्यलङ्कारलक्षणविचारवेलायां व्यङ्गार्थं स्वीकृतवान्।

अलङ्कारसम्प्रदायो भामहेन प्रवर्तितः। एतत्सम्प्रदायानुसारिणां मते अलङ्कारा एव काव्यस्य प्राणभूताः। शब्दार्थौ काव्यम् इति लक्षणेन शब्दार्थौ काव्यस्य शरीरम् इति स्वीकरणात् अलङ्कारः द्विविधः भवति। तौ शब्दालङ्कारः अर्थालङ्कारः चेति। सामान्यतया अनुप्रासः, उपमा, दीपकः, रूपकम् इति चत्वारः अलङ्काराः इति भरतमतम्। ते एव अलङ्काराः अनुदिनं वर्धमानाः कुवलयानन्दे १२५ सञ्जाताः। भामहः तस्य ग्रन्थे ३९ अलङ्कारान् स्वीकृतवान्। अलङ्कारसम्प्रदायप्रवर्त्तकाः रसतत्त्वं जानन्ति स्म, अत

एव ते रसादिवत् अलङ्कारः भवति इति उक्तवन्तः। रसा अपि अलङ्कारा एव न पृथक् तत्त्वान्तरम् इति तेषां मतम्।

## पाठगतप्रश्नाः-२

केचित् प्रश्नाः अधः प्रदीयन्ते-

७. अलङ्कारसम्प्रदायस्य प्रवर्तकः कः।

८. काव्यालङ्कारग्रन्थस्य रचयिता कः।

९. भामहस्य देशः कः।

१०. भामहस्य पितुः नाम किम्।

११. भामहस्य स्थितिकालः कः।

१२. काव्यालङ्कारे कति अलङ्काराः स्वीकृताः।

## २०.३) दण्डी

संस्कृतजगति काव्यशास्त्रस्य द्वितीयाचार्यत्वेन दण्डी स्मृतः भवति।

**जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।**
**कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि।**

इत्येवमादिभिः प्राचीनसहृदयवचनैः संस्कृतसाहित्ये दण्डिनो महती प्रतिष्ठा अनुमीयते। "दण्डिनः पदलालित्यम्" इति उक्तिः अपि दण्डिनः प्रसिद्धौ प्रमाणम्। दण्डिनः वास्तविकं नाम न ज्ञायते। यथा भवभूतेः माघस्य च नामविषये श्रूयते तथैव ब्रह्माण्डच्छत्रदण्डः इत्यादिदशकुमारस्य मङ्गलाचरणे दण्डपदप्रयोगेण दण्डी इति नाम।

**देशः** - दण्डिनः वासदेशस्य निर्णये अवन्तिसुन्दरीकथा प्रमाणम्। तदनुसारेण दण्डिनः पूर्वपुरुषाः गुर्जरप्रान्तस्थिते आनन्दपुरे तिष्ठन्ति स्म। ततः ते दक्षिणदेशावस्थितं सम्प्रति एलिचपुरसंज्ञया प्रथमानमचलपुरं नाम स्थानम् आगताः। तदेवं कवेः दाक्षिणात्यभावः सिद्ध्यति। काञ्ची - कावेरी - चोल – कलिङ्ग – मलयानिल – प्रभृतिदक्षिणप्रसिद्धस्थानादीनां दण्डिना कृतो भूयसोल्लेख एव प्रमाणम्।

दण्डिनो दाक्षिणात्यत्वे इदम् अपि प्रमाणान्तरम् अनुमीयते यत् काश्मीरदेशभवा आलङ्कारिकाः दण्डिनः मतं प्रायशः न कथयन्ति। अतः दण्डिनः सुदूरदक्षिणवासित्वं सिद्ध्यति।

**कालः**- यद्यपि दण्डिनः स्थितिकालः न अद्यापि निर्णीतः तथापि तस्य प्रेयोऽलङ्कारोदाहरणे-

"इति साक्षात् कृते देवे राज्ञो यद्राजवर्मणः।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम्।।"

इति कथनात् राजवर्मणः समकालिकत्वं सिद्ध्यति। राजवर्मा हि नरसिंहापराभिधानः काञ्चीनरेशः ७३७-७७९ मितवैक्रमाब्दानभितः सिंहासनारूढः इति ऐतिहासिकाः प्रवदन्ति। अयम् एव कालः दण्डिनः भवति।

दण्डी हि बाणभट्टं मयूरञ्च स्मरति अवन्तिसुन्दरीकथायाम्। तत् च अभिनवगुप्तः लोचने समुद्धरति इति दण्डिनः स्थितिकालस्य इयम् एव पूर्वापरसीमा। अतो हि सामान्यतः ७१५-७९० मितवैक्रमाब्दानभितो दण्डिनः स्थितिकालः।

ख्रीष्टदशमशतकोत्पन्नः अभिनवगुप्तः लोचनग्रन्थे लिखति- “यथाह दण्डी - 'गद्यपद्यमयी चम्पूः' ”इति।

ख्रीष्टदशमशतकपूर्वार्द्धसमुद्भूतः प्रतीहारेन्दुराजः उद्भटरचितस्य काव्यालङ्कारसारसंग्रहस्य लघुवृत्तौ लिखितवान् "अत एव दण्डिना 'लिम्पतीव' इत्यादि”।

कन्नड्भाषायां 'कविराजमार्ग'इति ग्रन्थम् एकम् अमोघवर्षः लिखितवान्। स स्पष्टभावेन काव्यादर्शम् आधारीकृत्य प्रणीत इति प्रतीयते। कविराजमार्ग इति नामकस्य तस्य ग्रन्थस्य रचनाकालः ८१५ ख्रीष्टाब्दतः - ८७५ ख्रीष्टाब्दमध्यवर्त्ती मन्यते।

दण्डी काव्यादर्शे यस्याः रीतेः वर्णनं कृतवान्। ताम् एव रीतिम् आश्रित्य वामनः काव्यालङ्कारसूत्रं रचितवान्। अतः दण्डी वामनपूर्ववर्त्तितया स्वीकर्तव्यः भवति। वामनस्य कालश्च ७७९ख्रीष्टाब्दतः ८१३ख्रीष्टाब्दो मन्यते।

एभिः प्रमाणैः दण्डिनः समयस्य परिसीमा अष्टमशतकम् इति मन्तव्यं भवति।

**कृतिः** - “त्रयो दण्डिप्रबन्धाश्च” एतदनुसृत्य काव्यादर्शः, दशकुमारचरितम्, अवन्तिसुन्दरीकथा इति त्रयो ग्रन्थाः दण्डिनः कथ्यन्ते। केचित् - “छन्दोविचित्यां सकलस्तत्प्रपञ्चः प्रदर्शितः” इति दण्डिवचनेन छन्दोविचिति नामकम् अपि दण्डिनः ग्रन्थम् एकं कल्पयन्ति। अलङ्कारग्रन्थेषु काव्यादर्शः इति ग्रन्थस्य अन्तर्भावः। गद्यग्रन्थेषु दशकुमारचरितम्, अवन्तिसुन्दरीकथा इति ग्रन्थद्वयम्।

दण्डिनः काव्यादर्शः परमलोकप्रियः भवति। यतो हि कन्नड्भाषायां कविराजमार्ग इति नाम्ना अस्य ग्रन्थस्य अनुवादः कृतो भवति। अपरञ्च सिंहलभाषायां "सिय बसलकर" इति नाम्ना अनुवादः कृतो भवति। अस्मिन् ग्रन्थे ४ परिच्छेदाः सन्ति। अत्र ६६० श्लोकाः सन्ति। प्रथमे परिच्छेदे काव्यलक्षणम्, काव्यभेदाः, वैदर्भ्यादयः रीतयः, दश गुणाश्च वर्णिताः सन्ति। द्वितीये परिच्छेदे ३५ अलङ्काराः, तेषां लक्षणम्, तेषाम् उदाहरणम्, तेषाम् उपभेदाः कथिताः सन्ति। तृतीये परिच्छेदे शब्दालङ्कारस्य विवेचना यत्र यमकप्रपञ्चः, चतुर्थे परिच्छेदे दोषाणां गवेषणा कृता अस्ति।

दण्डी रीतिप्रस्थानं समर्थितवान्। तथापि दण्डी अलङ्कारप्रस्थानस्य अपि समर्थकः आसीत्। दण्डिनः मते उपमाद्यलङ्कारः श्लेषादिगुणः इति एते अलङ्कारपदवाच्याः भवन्ति। दण्डी माधुर्यगुणवर्णनवेलायां रसस्थितिविषये अपि प्राह यत् कदाचित् वर्णस्य अर्थस्य वा उत्कर्षसाधनाय माधुर्यगुणः रसं परिपोषयति। सर्वप्रथमं दण्डी एव काव्ये शब्दस्य प्राध्यान्यम् उक्तवान्। काव्यस्य संज्ञां

प्राह- “शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली” इति। ततः परं जगन्नाथाचार्यः इदम् एव मतम् आश्रित्य ग्रन्थं लिखितवान्।

## पाठगतप्रश्नाः-३

केचित् प्रश्नाः अधः प्रदीयन्ते-

१३. काव्यादर्शस्य रचयिता कः।

१४. दण्डिनः कालः कः।

१५. दण्डी कुत्रत्यः।

१६. काव्यादर्शे कति परिच्छेदाः सन्ति।

१७. काव्यादर्शे कति श्लोकाः सन्ति।

१८. काव्यादर्शस्य अनुवादग्रन्थः कः।

## २०.४) वामनः

आलङ्कारिकसूच्यां वामनस्य महत्त्वपूर्णं स्थानम् अस्ति। तस्य हि काव्यालङ्कारसूत्राणि विषयप्रतिपादनदृष्ट्या अत्यन्तं महत्त्वपूर्णम् अस्ति। अयम् एव वामनाचार्यः रीतिसम्प्रदायस्य जनकः अस्ति। आलङ्कारिकः वामनः वैयाकरणात् काशिकारात् वामनात् भिन्नः भवति। आलङ्कारिकः वामनः काव्ये रीतेः एव प्राधान्यं स्वीकृतवान्। अत एव रीतिसम्प्रदायेषु अग्रगण्यः वामनाचार्यः भवति। वामनाचार्यस्य देशकालकृतिविषये सामान्यः परिचयः दीयते।

**देशः** - वामनः जयापीडनाम्नः काश्मीरराजस्य राष्ट्रकूटवंशस्य गोविन्दतृतीयस्य च सभापण्डितः सचिवः च आसीत्। राजतरङ्गिणीकारस्य "वामनाद्याश्च मन्त्रिणः”इति वचनात् ज्ञायते। अत एव काश्मीरदेशः वामनस्य वासस्थानम् आसीत्।

**कालः** - वामनः जयापीडनाम्नः काश्मीरराजस्य राष्ट्रकूटवंशस्य गोविन्दतृतीयस्य च सभापण्डितः सचिवश्च आसीत्। जयापीडस्य शासनकालः ७७९-८१९ ई.। गोविन्दस्य शासनकालः च ७९४ – ८१३ ई. मन्यते। अतः वामनस्य समयः अष्टमशतकस्य चरमभागः नवमशतकस्य आदिभागश्च निश्चीयते।

अभिनवगुप्तः वामनं स्वग्रन्थे लोचने "वामनाभिप्रायेणायमाक्षेपः” इति स्मरति। अतः वामनस्य अभिनवगुप्तपूर्ववर्तित्वं सिद्ध्यति। वामनश्च कादम्बरीम्, उत्तररामचरितम्, शिशुपालवधञ्च उदाहरति। अत एव वामनस्य बाण – भवभूति - माघपरवर्तिता सिद्ध्यति। एतेन अपि समायाति यत् वामनस्य समयः अष्टमशतकस्य चरमभागः नवमशतकस्य आदिभागश्च निश्चीयते।

**कृतिः** - वामनः काव्यालङ्कारसूत्रग्रन्थस्य रचयिता। वामनस्य काव्यालङ्कारसूत्रनाम्ना ग्रन्थः स्वोपज्ञवृत्तिसहितः प्रसिद्धः। अत्र ग्रन्थे अलङ्कारशास्त्रस्य सर्वे अपि विषयाः सूत्रैः निरूपिताः सन्ति। ग्रन्थे अस्मिन् पञ्च अध्यायाः सन्ति। अत्र ३१९ सूत्राणि सन्ति। अत्र अध्यायाः अधिकरणशब्देन व्यवहृताः सन्ति। प्रथमे अधिकरणे काव्यतत्प्रयोजनरीतयः निरूपिताः सन्ति। द्वितीये अधिकरणे पदवाक्यवाक्यार्थदोषाः निरूपिताः सन्ति। तृतीये अधिकरणे गुणविवेचना कृता यत्र दशगुणानां शब्दार्थवृत्तितया विंशतिविधता उक्ता, चतुर्थे अधिकरणे शब्दार्थालङ्काराः, पञ्चमे अधिकरणे कतिचन अशुद्धयः निर्दिष्टाः सन्ति। काव्यालङ्कारस्य प्राचीनः टीकाकारः सहदेवः कथितवान् यद् वामनस्य कृतिः नष्टा। तस्याः कृतेः उद्धारः मुकुलभट्टेन कृतः। स ग्रन्थः सम्प्रति प्राप्यते। वामनस्य केचन विशिष्टसिद्धान्ताः सन्ति। ते यथा - १. गुणालङ्कारयोः भिन्नता, २. रीतेस्त्रैविध्यम्, ३. वक्रोक्तेर्लक्षणारूपता, ४. विशेषोक्तेर्लक्षणवैचित्र्यम्, ५. समग्रस्य अपि अर्थालङ्कारप्रपञ्चस्य उपमारूपता। वामनो रीतिम् आत्मानं काव्यस्य अभिधत्ते। यद्यपि प्राचीना अपि विद्वांसः रीतिं निरूपितवन्तः। तथापि रीतिः काव्यस्य आत्मा इति तु वामनः सर्वप्रथमं प्रोक्तवान्।

रीतिसम्प्रदायस्य प्रवर्त्तकः वामनः, तन्मते रीतिः आत्मा काव्यस्य। का नाम रीतिः। पदसङ्घटना रीतिः। सेयं पदसङ्घटना गुणेषु आयत्तेति गुणसम्प्रदायात्मना परिणमते। रीतिभेदानां व्यवस्थितं वर्णनं दण्डी अपि कृतवान्। गुणालङ्कारयोः असङ्कीर्णं रूपं प्रकाश्य गुणानां शब्दार्थगतत्वेन विंशतिप्रकारता निरूपिता। काव्यशोभायाः कर्तारः धर्माः गुणाः। तददतिशयहेतवः तु अलङ्काराः सन्ति इति वामनमतम्। भामहादयः अपि रसम् अलङ्कारं च स्वीकृतवन्तः। वामनः रसं कान्तिगुणस्वरूपम् आख्याय तस्य आवश्यकतां स्वीकृतवान्।

## पाठगतप्रश्नाः-४

केचित् प्रश्नाः अधः प्रदीयन्ते-

१९. रीतिसम्प्रदायस्य प्रवर्त्तकः कः।

२०. वामनस्य रचितग्रन्थस्य नाम किम्।

२१. वामनस्य देशः कः।

२२. वामनस्य कालः कः।

२३. वामनस्य मते काव्यस्य आत्मा कः।

२४. काव्यालङ्कारसूत्रे कति अधिकरणानि सन्ति।

२५. काव्यालङ्कारसूत्रे कति सूत्राणि सन्ति।

## २०.५) रुद्रटः

आलङ्कारिकेषु अग्रगण्यः अयं रुद्रटाचार्यः। रुद्रटाचार्यस्य अपरं नाम रुद्रभट्टः। आलङ्कारिकसम्प्रदायेषु रुद्रटः इति नामकः आलङ्कारिकस्तु अत्यन्तं सुप्रसिद्धः अस्ति। भट्टवामुकस्य पुत्रः रुद्रटः आसीत्। रुद्रटः शतानन्दः इति नाम्ना परिचितः अस्ति।

**देशः**- रुद्रटाचार्यः काश्मीरवासी आसीत्। काश्मीरप्रान्ते एव शास्त्रचर्चाम् अकरोत्। अतः अस्य रुद्रटाचार्यस्य वासस्थानं काश्मीरदेशः आसीत्।

**कालः** - रुद्रटेन विरचितस्य काव्यालङ्कारस्य उद्धरणानि राजशेखरः भोजराजः प्रतिहारेन्दुराजश्च स्वकीये ग्रन्थे लिखन्ति। अतः राजशेखरादिभ्यः पूर्ववर्त्ती अयं रुद्रटाचार्यः। अत एव नवमशतकस्य उत्तरभागे रुद्रटः आसीत्।

दशमशताब्दीयः वल्लभदेवः रुद्रटस्य ग्रन्थस्य उपरि टीकां रचितवान्। एतेन आगतं यत् दशमशताब्द्याः पूर्वकालिकः रुद्रटाचार्यः भवति।

जैकोवीमहोदयः रुद्रटं शङ्करवर्मनाम्नः अवन्तिवर्मपुत्रस्य समसामयिकं मन्यते। अतोऽपि पूर्वोक्तः समय एव सिद्ध्यति।

**कृतिः** - काव्यालङ्कारः इति नामकं ग्रन्थं लिखितवान् रुद्रटः। शृङ्गारतिलकम् इत्यस्य प्रणेता रुद्रभट्टः। काव्यालङ्कारस्य प्रणेता रुद्रटः। अत्र रुद्रभट्टः रुद्रटः च समानः इति केषाञ्चित् मतम्। रुद्रटात् भिन्नः रुद्रभट्टः इति अपि एकः पक्षः। अधिकतया रुद्रटस्य कृतयः तिस्त्रः इति केचित्। ताः यथा- १. काव्यालङ्कारः, २. शृङ्गारतिलकम्, ३. त्रिपुरवधकाव्यम् चेति।

रुद्रटस्य काव्यालङ्कारः विषयविवेचनदृष्ट्या अतीव व्यापकः। काव्यप्रयोजनम्, काव्यस्य उद्देश्यम्, कवितासामग्री, अलङ्कारः, भाषा, रीतिः, रसाः, वृत्तयः सर्वे अपि विषयाः अत्र आलोचिताः। अलङ्कारसम्प्रदायस्य आचार्यः रुद्रटः। अतः काव्ये अलङ्काराः एव प्रधानाः। ग्रन्थे अस्मिन् षोडश अध्यायाः सन्ति। अत्र पद्यानि ७३४ मितानि सन्ति। अलङ्काराणां विभाजनं वर्गीकरणं च सर्वं प्रथमम् अयं कृतवान्। अलङ्काराणां मूलतत्त्वानि चत्वारि सन्ति। तानि च – वास्तवम्, औपम्यम्, अतिशयः, श्लेषः चेति। प्राचीनाः आलङ्कारिकाः अलङ्कारान् प्रोक्तवन्तः। तेषु काञ्चित् अलङ्कारान् त्यक्तवान्। नूतनतया केचित् अलङ्काराः स्वीकृताः। केषाञ्चित् अलङ्काराणां नामपरिवर्तितम् अस्ति। तदेवं सर्वथा अलङ्कारमार्गः परिष्कृतः। वस्तुतस्तु अलङ्काराणाम् समीक्षणम् आसीत् रुद्रटग्रन्थस्य उद्देश्यम्। नवरसातिरिक्तं प्रेयः वात्सल्यं वा रसः इति मन्यते।

## पाठगतप्रश्नाः-५

केचित् प्रश्नाः अधः प्रदीयन्ते-

२६. रुद्रटस्य अपरं नाम किम् अस्ति।

२७. रुद्रटस्य कालः कः।

२८. रुद्रटस्य देशः कः।

२९. काव्यालङ्कारग्रन्थस्य रचयिता कः।

३०. काव्यालङ्कारे कति पद्यानि सन्ति।

३१. काव्यालङ्कारे कति अध्यायाः सन्ति।

## २०.६) अभिनवगुप्तः

ध्वनिप्रस्थानस्य विशिष्टः आलङ्कारिकः अभिनवगुप्तः आसीत्। अयम् अभिनवगुप्तः न केवलम् आलङ्कारिकः आसीत् अपि तु शैवदर्शनाचार्यः तन्त्ररहस्यज्ञः च आसीत्। प्रायः कथा श्रूयते यत् स्वयं आनन्दवर्धनः अभिनवगुप्तात्मना प्रकटीभूतः अभवत्। ततः ध्वन्यालोकस्य लोचनम् इति टीकां लिखितवान्। अयम् अभिनवगुप्तः काश्मीरदेशस्य शारदाधामस्य अत्यन्तं प्रतिष्ठितः सिद्धः महापुरुषश्च आसीत्। अभिनवगुप्तः शिवस्य अवतारः इति जनश्रुतिः आसीत्।

**देशः-** अभिनवगुप्तस्य पूर्वपुरुषः अत्रिगुप्तः गङ्गायमुनयोः मध्यवर्तिस्थानं परित्यज्य ललितादित्यस्य निर्देशेन काश्मीरदेशः आगतः आसीत्। अत एव अभिनवगुप्तस्य वासस्थानं काश्मीरदेशः आसीत् इति विदुषां मतम्।

**कालः** - आनन्दवर्धनस्य ध्वन्यालोकग्रन्थस्य उपरि लोचनम् इति टीकां रचितवान्। एतेन आगतं यत् अभिनवगुप्तः आनन्दवर्धनपरवर्त्ती। अभिनवगुप्तस्य समयः दशमशताब्द्याः चरमभागः एकादशशताब्द्याः आदिभागः वा इति निश्चीयते।

**वंशपरिचयः** - अभिनवगुप्तस्य पितुः नाम चुखलः। चुखलस्य अपरं नाम नरसिंहगुप्तः। स शिवस्य परमो भक्तः आसीत्। तस्य मातुः नाम विमला। तस्य पितामहस्य नाम वराहगुप्तः। तस्य कनिष्ठभ्रातुः नाम मनोरथगुप्तः। उत्पलाचार्यः, प्रतीहारेन्दुराजः, लक्षणगुप्तः इति एते अभिनवगुप्तस्य गुरवः आसन्। कर्णः, मन्द्रः इति एतौ शिष्यौ।

**कृतिः** - अभिनवगुप्तस्य कृतिषु ध्वन्यालोकस्य लोचनटीका, भरतकृतनाट्यशास्त्रस्य अभिनवभारती नाम टीका, तन्त्रालोकः चेति त्रयो ग्रन्थाः नितान्तप्रसिद्धाः सन्ति। रससिद्धान्तप्रवर्त्तकतया अयं साहित्यशास्त्रस्य महोपकारकः भवति। भरतमुनिः अष्टौ रसान् स्वीकृतवान्। परन्तु नाट्यशास्त्रस्य उपरि अभिनवभारती इति टीकायाम् अभिनवगुप्तः नव रसान् प्रतिपादितवान्। शान्तः अपि रसः इति अभिनवगुप्तस्य मतम्। सम्प्रति नाट्यशास्त्रस्य कियत् माहात्म्यम् अस्ति इति ज्ञानं तु अभिनवभारती इति टीकां विना न सम्भवति। ध्वन्यालोकस्य उपरि लोचनटीका अपि मूलग्रन्थापेक्षया अधिका प्रशस्तिः प्राप्ता। विना लोचनं ध्वन्यालोकस्य एतावत् माहात्म्यं न स्यात्। आनन्दवर्धनः स्वकीये ध्वन्यालोके वस्तुध्वनेः, रसध्वनेः, अलङ्कारध्वनेः च समं प्राधान्यं दर्शितवान्। परन्तु अभिनवगुप्तः रसध्वनेः अधिकं प्राधान्यं स्वीकरोति तस्य लोचनटीकायाम्। तथैव जगति रसध्वनेः प्राधान्यता सर्वैः स्वीक्रियते। तदेव आह – "रसेनैव सर्वं जीवति काव्यम् .... न हि तच्छून्यं काव्यं किञ्चिदस्ति" इति।

इदम् एव मतम् आश्रित्य विश्वनाथः साहित्यदर्पणः इति ग्रन्थं रचितवान्। तत्र काव्यस्य लक्षणं प्राह- "वाक्यं रसात्मकं काव्यम्"इति। भैरवस्तवः, क्रमस्तोत्रः, बोधपञ्चदशिका, मालिनीविजयवार्तिकम, ईश्वरप्रत्यभिज्ञाविमर्शिनी, ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी इति एताः कृतयः अपि अभिनवगुप्तस्य आसन्।

अभिनवगुप्तस्य विषये काचित् जनश्रुतिः श्रूयते। भैरवस्त्रोत्रस्य आवृत्तिं कुर्वन् शिष्येण साकम् अभिनवगुप्तः गुहायाः अभ्यन्तरे प्रविष्टवान्। ततः परं स अदृश्यः अभवत्। अत एव अभिनवगुप्तः सिद्धः महापुरुषः इति जनाः मन्यन्ते।

## पाठगतप्रश्नाः-६

केचित् प्रश्नाः अधः प्रदीयन्ते-

३२. अभिनवगुप्तस्य देशः कः।

३३. अभिनवगुप्तस्य कालः कः।

३४. लोचनटीकायाः कर्ता कः।

३५. अभिनवभारती कस्य ग्रन्थस्य टीका।

३६. अभिनवगुप्तस्य मातुः नाम किम्।

३७. अभिनवगुप्तस्य पितुः नाम किम्।

## २०.७) कुन्तकः

आलङ्कारिकसम्प्रदायेषु कुन्तकाचार्यः अपि अग्रगण्यः भवति। वक्रोक्तिजीवितम् इति ग्रन्थस्य रचयिता कुन्तकाचार्यः। वक्रोक्तिकारः कुन्तकाचार्यः ध्वनिकारात् परवर्त्ती भवति। ध्वनिप्रस्थानस्य ध्वन्यालोकेन ध्वन्यालोकस्य लोचनम् इति टीकया च परिष्कृते अपि ध्वनिप्रस्थानस्य विरोधार्थं कुन्तकः वक्रोक्तिजीवितम् इति ग्रन्थं रचितवान्। वक्रोक्तिसम्प्रदायस्य प्रवर्त्तकः कुन्तकः। अयम् एव ग्रन्थः वक्रोक्तिसम्प्रदायस्य मुख्यः ग्रन्थः भवति।

**देशः** - कुन्तकस्य वासस्थानं काश्मीरदेशः आसीत्। कुन्तकाचार्यस्य शास्त्रचर्चा काश्मीरे एव संजाता। कुन्तकः काश्मीरवासी इति तु विदुषां न मतपार्थक्यं विद्यते।

**कालः** - वक्रोक्तिकारः ध्वनिप्रस्थानस्य विरोधाय वक्रोक्तिसम्प्रदायम् आरब्धवान्। अतः ध्वनिकारात् परवर्त्ती भवति कुन्तकः। ध्वनिकारस्य कालः नवमशतकम् आसीत्। अतः नवमशतकात् परवर्त्ती भवति कुन्तकः।

अभिनवगुप्तस्य समसामयिकः भवति इति जनश्रुतिः विद्यते। अभिनवगुप्तस्य कालः दशमशतकस्य चरमभागः एकादशशतकस्य आदिभागः वा।

अत एव कुन्तकस्य अपि स एव कालः भवति इति ऐतिहासिकाः प्रवदन्ति।

महिमभट्टस्य व्यक्तिविवेकग्रन्थे कुन्तकविरचितस्य वक्रोक्तिजीवितस्य उद्धृतं समालोचनं च विद्यते। वक्रोक्तिजीवितस्य सारः अलङ्कारसर्वस्वे विद्यते। एतेन आगतं यत् महिमभट्टस्य समकालिकः पूर्ववर्त्ती वा कुन्तकाचार्यः। कुन्तकाचार्यस्य समयः एकादशशतकम्।

**कृतिः** - वक्रोक्तिजीवितम् इति ग्रन्थस्य रचयिता कुन्तकाचार्यः। सम्प्रति प्रायः पूर्णः ग्रन्थः न उपलभ्यते। ग्रन्थे अस्मिन् चत्वारः उन्मेषाः सन्ति। येषु वक्रोक्तेः प्रभेदानां साङ्गोपाङ्गानां वर्णनं कृतम्। कुन्तकाचार्यः ध्वनिवादं न कदापि समर्थितवान्। वक्रोक्तिमाध्यमेन एव शब्दार्थस्य चमत्कारः भवति। व्यञ्जनाध्वनिः वक्रोक्तेः एकः भागः। कुन्तकाचार्यस्य मते वक्रोक्तिः एव काव्यस्य प्राणभूतः भवति। वक्रोक्तिजीवितग्रन्थे भामहस्य दण्डिनः उद्भटस्य वा उल्लेखं कृतवान्। किन्तु न कदापि आनन्दवर्धनस्य उल्लेखं कृतवान्। एवञ्च अभिनवगुप्तस्य अपि नामोच्चारणं नैव करोति स्वकीये ग्रन्थे कुन्तकाचार्यः। अभिनवगुप्तः अपि कुन्तकस्य नाम न लिखति तस्य टीकाग्रन्थे। एतेन अपि आयाति यत् ध्वनिप्रस्थानस्य विरोधं कृतवान् कुन्तकः। अथवा अभिनवगुप्तस्य समसामयिकः भवति कुन्तकाचार्यः। ध्वनिप्रस्थानं खण्डयित्वा वक्रोक्तिसम्प्रदायम् आरब्धवान्।

वक्रोक्तिः काव्यजीवितम् इति अवदन् कुन्तकादयः। वक्रोक्तिः नाम प्रसिद्धाभिधानव्यतिरिक्ता विचित्रैवाभिधा। भामहेन अतिशयोक्तिः एव वक्रोक्तिनाम्ना उक्ता। कुन्तकाचार्यः ध्वनेः अन्तर्भावं वक्रोक्तौ दर्शितवान्। सः अयं वक्रोक्तिसम्प्रदायः अनन्तरभाविभिः आचार्यैः न आदृतः। वक्रोक्तिः अपि कश्चित् अलङ्कारः इति रुद्रटः मन्यते। एवं प्रकारेण वक्रोक्तिसम्प्रदायस्य खण्डनं पूर्वाचार्याः कृतवन्तः।

## पाठगतप्रश्नाः-७

केचित् प्रश्नाः अधः प्रदीयन्ते-

३८. कुन्तकस्य कालः कः।

३९. कुन्तकस्य देशः कः।

४०. कुन्तकस्य ग्रन्थस्य नाम किम्।

४१. वक्रोक्तिसम्प्रदायस्य जनकः कः।

४२. वक्रोक्तिजीवितग्रन्थे कति उन्मेषाः सन्ति।

४३. कुन्तकस्य मते काव्यस्य प्राणः कः।

## पाठसारः

साहित्यग्रन्थेषु आनन्दः एव लभ्यते। तत्रापि अस्माकम् आनन्दः काव्यपठनेन भवति। काव्येषु दोषाणां विवेचनम्, काव्येषु रसादीनां प्राधान्यताविचारः इत्यादिकं तु अलङ्कारशास्त्रे जायते। तत्रापि केषाञ्चित् आलङ्कारिकाणां मते रसः एव काव्ये प्रधानः, केषाञ्चित् मते रीतिः एव प्रधाना, केषाञ्चित् मते काव्ये अलङ्कारः प्रधानः इति बहुधा मतानि आगतानि। अत एव रीतिप्रस्थानस्य, ध्वनिप्रस्थानस्य, अलङ्कारप्रस्थानस्य रसप्रस्थानस्य च आविर्भावः जातः। अत्र आलङ्कारिकाणां देशकालकृतिविषये चर्चा विद्यते। भरतमुनिः नाट्यशास्त्रस्य प्रवर्त्तकः भवति। चतुर्थः ईशवीयः पूर्वकालिकः भरतमुनिः काव्ये रसः एव प्रधानः इति मतम् आश्रित्य रसप्रस्थानस्य प्रारम्भम् अकरोत्। षष्ठशतकवर्त्ती काश्मीरवासी भामहः काव्यालङ्कारग्रन्थं रचितवान्। भामहस्य मते तु काव्ये अलङ्कारः एव प्रधानः भवति। अतः अलङ्कारप्रस्थानस्य प्रवर्त्तकः भामहः। अष्टमशतकवर्त्ती दाक्षिणात्यः आलङ्कारिकः दण्डी काव्यादर्शः इति ग्रन्थं लिखितवान्। दण्डी अलङ्कारसम्प्रदायस्य कश्चन प्रमुख्यः आचार्यः भवति। तथापि दण्डी रीतिविवेचकतया प्रख्यातः आसीत्। नवमशतकवर्त्ती काश्मीरवासी वामनः काव्यालङ्कारसूत्रं विरचितवान्। वामनस्य मते काव्ये अलङ्कारः एव प्रधानः भवति। अलङ्कारप्रस्थानस्य प्रवर्त्तकः वामनः। काश्मीरवासी रुद्रटः काव्यालङ्कारग्रन्थं लिखितवान्। अस्य मते अपि काव्ये अलङ्कारः एव प्रधानः भवति। अभिनवगुप्तः काश्मीरवासी आसीत्। तस्य स्थितिकालः तु दशमशतकोत्तरभागः भवति। अभिनवगुप्तः नाट्यशास्त्रस्य उपरि अभिनवभारती इति टीकां ध्वन्यालोकस्य उपरि लोचनम् इति टीकां च रचितवान्। अभिनवगुप्तः अपि रसप्रस्थानस्य एकः आचार्यः भवति। काव्ये रसः एव प्रधानः इति अभिनवगुप्तस्य मतम्। काश्मीरवासी कुन्तकाचार्यः वक्रोक्तिजीवितम् इति ग्रन्थं विरचितवान्। अस्य कालः भवति एकादशशतकम्। कुन्तकस्य मते तु काव्ये वक्रोक्तिः एव प्रधाना। अत एव ध्वनिप्रस्थानस्य विरोधं कृत्वा वक्रोक्तिसम्प्रदायं प्रारम्भितवान्। एवञ्च प्रकृतपाठे आलङ्कारिकाणां देशकालम् उक्त्वा तेषां कृतिविषये अपि किञ्चित् आलोचनं कृतम् अस्ति।

## पाठान्तप्रश्नाः

१. भरतमुनेः देशकालकृतिविषये लघुटिप्पणीं लिखत।
२. नाट्यशास्त्रस्य संक्षिप्तं परिचयं लिखत।
३. भरतमुनेः सामान्यं परिचयं लिखत।
४. भामहस्य देशकालविषये लघुटिप्पणीं लिखत।
५. काव्यालङ्कारस्य संक्षिप्तं परिचयं लिखत।
६. भामहस्य कालविषये संक्षिप्तं परिचयं लिखत।
७. दण्डिनः देशकालकृतिविषये लघुटिप्पणीं लिखत।

८. दण्डिनः कालविषये संक्षिप्तं परिचयं प्रददातु।

९. काव्यादर्शस्य संक्षिप्तं परिचयं लिखत।

१०. वामनस्य संक्षिप्तं परिचयं प्रददातु।

११. वामनस्य देशकालकृतिविषये लघुटिप्पणीं लिखत।

१२. काव्यालङ्कारसूत्रस्य संक्षिप्तं परिचयं प्रददातु।

१३. रुद्रटस्य देशकालकृतिविषये लघुटिप्पणीं लिखत।

१४. काव्यालङ्कारग्रन्थस्य सामान्यं परिचयं प्रददातु।

१५. अभिनवगुप्तस्य देशकालकृतिविषये लघुटिप्पणीं लिखत।

१६. अभिनवगुप्तस्य कृतिविषये लघुटिप्पणीं लिखत।

१७. अभिनवगुप्तस्य सामान्यं परिचयं लिखत।

१८. कुन्तकस्य देशकालकृतिविषये प्रबन्धं लिखत।

१९. वक्रोक्तिजीवितम् इति ग्रन्थम् आश्रित्य प्रबन्धं लिखत।

## पाठगतप्रश्नानाम् उत्तराणि

उपरि विद्यमानानां प्रश्नानाम् उत्तराणि प्रदीयन्ते-

१. भरतमुनिः।

२. भरतमुनिः।

३. षष्ठे सप्तमे च अध्याये।

४. ३६, ३७ वा अध्यायाः।

५. तामिलग्रन्थस्य रचनाकालः चतुर्थः ई. पू. मन्यते, ततः पूर्ववर्ती भरतः।

६. ५००० श्लोकाः।

७. भामहः।

८. भामहः।

९. काश्मीरः।

१०. रक्रिलगोमिनः।

११. षष्ठशतकवर्त्ती

१२. ३९।

१३. दण्डी

१४. अष्टमशतकम्।

१५. दाक्षिणात्यः

१६. चत्वारः।

१७. ६६० श्लोकाः।

१८. कविराजमार्ग इति।

१९. वामनः।

२०. काव्यालङ्कारसूत्रम्।

२१. काश्मीरदेशः।

२२. अष्टमशतकस्य चरमभागः नवमशतकस्य आदिभागश्च।

२३. रीतिः।

२४. पञ्च।

२५. ३१९ सूत्राणि।

२६. रुद्रभट्टः।

२७. नवमशतकस्य उत्तरभागः।

२८. काश्मीरः।

२९. रुद्रटः।

३०. ७३४ पद्यानि।

३१. षोडश अध्यायाः।

३२. काश्मीरः।

३३. दशमशताब्द्याः आदिभागः
एकादशशताब्द्याः चरमभागो वा।

३४. अभिनवगुप्तः।

३५. नाट्यशास्त्रस्य।

३६. विमला।

३७. नरसिंहगुप्तः।

३८. एकादशशतकम्।

३९. काश्मीरदेशः।

४०. वक्रोक्तिजीवितम्।

४१. कुन्तकाचार्यः।

४२. चत्वारः उन्मेषाः।

४३. वक्रोक्तिः काव्यस्य प्राणः।

छात्राणां बोधसौकर्याय आलङ्कारिकाणां देशकालकृतिविषये तालिका प्रदीयते।

| नाम | देशः | कालः | कृतिः |
|---|---|---|---|
| भरतः | काश्मीरः | चतुर्थशतकात् पूर्वम् | नाट्यशास्त्रम् |
| भामहः | काश्मीरः | षष्ठशतकम् | काव्यालङ्कारः |
| दण्डी | दाक्षिणात्यः | अष्टमशतकम् | काव्यादर्शः |
| वामनः | काश्मीरः | नवमशतकम् | काव्यालङ्कारसूत्रम् |
| रुद्रटः | काश्मीरः | नवमशतकम् | काव्यालङ्कारः |
| अभिनवगुप्तः | काश्मीरः | दशमशतकम् | अभिनवभारती, लोचनटीका,तन्त्रालोकः |
| कुन्तकः | काश्मीरः | एकादशशतकम् | वक्रोक्तिजीवितम् |

॥ इति विंशः पाठः ॥

# २१

# आलंकारिकपरिचयः-२

## प्रस्तावना

कवयः साहित्यस्य निर्माणाय प्रयतन्ते। परन्तु अज्ञातपूर्वतया एव साहित्ये अलङ्काराणाम् आत्मप्रकाशो भवति। यथा विश्वस्य प्राचीनतमऋग्संहितायाम् ऋषयः अज्ञातपूर्वतया एव अलङ्काराणां प्रयोगं कृतवन्तः।

ऋग्वेदे उपमा, रूपकम्, अतिशयोक्तिः, अनुप्रासः इत्यादीनाम् अलङ्काराणां प्रयोगः अस्ति। अग्निपुराणे काव्यविभागः, काव्यस्य रीतयः, काव्यस्य गुणाः, इति एते विषयाः चर्चिताः सन्ति। इतःपरं साहित्यशास्त्रस्य विवेचनाय अलङ्कारशास्त्रम् अपि समागतम्। प्राचीनाः आलङ्कारिकाः काव्यविषये बहूनि मतानि प्रदत्तवन्तः। काव्ये कः प्राणभूतः भवति इति विषयं स्वीकृत्य आलङ्कारिकाणां मतसाम्यं मतवैसाम्यं च उभयधा दृश्यते। ध्वनिकारः आनन्दवर्धनः स्वकीये ध्वन्यालोकग्रन्थे ध्वनिः एव प्राणभूतः इति मतं दर्शितवान्। अत्र एव काव्ये ध्वनिविरोधिनां मतम् उपस्थाप्य खण्डितवान्। ततः परं मम्मटाचार्यादयः काव्यप्रकाशग्रन्थं लिखितवन्तः। तत्र काव्यलक्षणं प्राह- "तददोषौ शब्दार्थौ सगुणौ सावनलङ्कृती पुनः क्वापि" इति। इदम् एव काव्यलक्षणं खण्डयित्वा विश्वनाथः साहित्यदर्पणग्रन्थं लिखितवान्। तत्र वाक्यलक्षणं प्राह - "काव्यं रसात्मकं वाक्यम् "इति। ततःपरं जगन्नाथः वाक्यलक्षणम् इदम् खण्डयित्वा रसगङ्गाधरग्रन्थं लिखितवान्। तत्र वाक्यलक्षणं प्राह - "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति। एवम् आलङ्कारिकाः काव्यविषये स्वस्वसिद्धान्तं प्रतिपादितवन्तः।

भारतीयपरम्परायां विद्वांसः स्वकीये ग्रन्थे न कदापि स्वकीयपरिचयादिकं स्थापयन्ति। तस्मात् एतादृशानां विदुषां देशकालादिविचारः तु दुष्करः भवति। परन्तु ध्वनिकारस्य मतं मम्मटः स्वीकृतवान्, मम्मटस्य मतम् खण्डितवान् विश्वनाथः, विश्वनाथस्य मतं जगन्नाथः खण्डितवान्। एतेन आनन्दवर्धनमम्मटविश्वनाथादीनां मध्ये पौर्वापर्यं ज्ञातुं शक्यते। कदाचित् ग्रन्थे तत्तत्कालवर्त्तिनः राज्ञः नाम उपलभ्यते। एतैः प्रमाणैः आनन्दवर्धन – मम्मट- विश्वनाथ - जगन्नाथ इति एतेषां देशकालादिकम् अनुमीयते। ध्वनिकारादीनां देशकालकृतिविषये सामान्यः परिचयः इति एव अस्य पाठस्य विषयः।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान् वा -

- ध्वनिकारस्य परिचयं ज्ञातुं प्रभवेत्।
- ध्वनिकारस्य कृतिं ज्ञातुं शक्नुयात्।



- कः आलङ्कारिकः ध्वनिसम्प्रदायस्य प्रवर्तकः इति ज्ञातुं प्रभवेत्।
- आलङ्कारिकः तस्य देशः कालः कृतयः इति विषये ज्ञानं भवेत्।
- आलङ्कारिकस्य वंशविषयकं ज्ञानं भवेत्।
- कः आलङ्कारिकः कस्य सम्प्रदायस्य प्रवर्त्तकः इति ज्ञानं प्रभवेत्।

## २१.१) आनन्दवर्धनः

आनन्दवर्धनो हि काव्यशास्त्राकाशे सर्वसमुज्वलं नक्षत्रम्। अलङ्कारसाहित्यस्य इतिहासे आनन्दवर्धनः एकम् उज्ज्वलपूर्णम् अध्यायं रचितवान्। अलङ्कारसाहित्ये आनन्दवर्धनं विना अलङ्कारशास्त्रं न कदापि पूर्णताम् एति। काव्यजगति तस्य ध्वन्यालोकस्य प्रवेशः सुमहत् सौभाग्यम् आधत्ते। ध्वनिशास्त्रस्य व्याख्यातृत्वेन स हि सर्वान् एव आचार्यान् अतिशेते। आनन्दवर्धनः काव्ये ध्वनिः एव प्रधानः इति मत्वा ध्वनिसम्प्रदायम् आरब्धवान्। ध्वन्यालोके ग्रन्थे ध्वनेः अभाववादिनः लक्षणावादिनः अनिर्वचनीयतावादिनः च मतं खण्डयित्वा सर्वप्रथमं ध्वनिं प्रतिपादितवान्। इदानीं तादृशस्य ध्वनिकारस्य देशकालकृतिविषये आलोच्यते।

**देशः** - आनन्दवर्धनः काश्मीरक्षितिपालस्य अवन्तिवर्मणः सभापण्डितः आसीत्। तत्र प्रमाणम् एकः श्लोकः वर्तते-

"मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।

प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः"।। इति

एतेन आगतं यत् आनन्दवर्धनः काश्मीरवासी आसीत्।

**कालः** - आनन्दवर्धनः काश्मीरक्षितिपालस्य अवन्तिवर्मणः सभापण्डितः आसीत्। अत एव अवन्तिवर्मणः कालः एव आनन्दवर्धनस्य अपि कालः भवति। अवन्तिवर्मणः समयः ८५५ – ८८३ ई. विद्यते, अत आनन्दवर्धनः अपि तत्कालिकः भवति।

**वंशपरिचयः** - आनन्दवर्धनस्य पितुः नाम नोणभट्टः इति आसीत्। केषाञ्चित् मते ध्वनिकारः ध्वन्यालोककारः च समानः जनः इति। स च आनन्दवर्धनः। तत्र प्रमाणं राजशेखरस्य एकः श्लोकः -

"ध्वनिनातिगम्भीरेण काव्यतत्त्वनिवेशिना।

आनन्दवर्धनः कस्य नासीदानन्दवर्धनः।। "इति

परन्तु ध्वन्यालोकस्य लोचनटीकाकारः अभिनवगुप्तः कथयति यत् ध्वनिकारः ध्वन्यालोककारश्च न समानः जनः। ध्वनिकारिकायाः उपरि रचितायाः वृत्तेः नाम ध्वन्यालोकः। तत्र कारिकाः ध्वनिकारिकाः उच्यन्ते। वृत्तेः नाम आलोकः इति। केषाञ्चित् मते तु ध्वनिकारस्य अपरं नाम सहृदयः।

**कृतिः** - अयम् आचार्यः ध्वनिप्रस्थानस्य प्रवर्त्तनाय ध्वन्यालोकं ग्रन्थं रचितवान्। ध्वन्यालोकस्य अपरं नाम सहृदयालोकः, काव्यालोकः। आनन्दवर्धनस्य ध्वन्यालोकातिरिक्ताः



विषमबाणलीला, अर्जुनचरितम्, देवीशतकम्, इति त्रयः कविताग्रन्थाः प्राप्यन्ते। ध्वन्यालोके त्रयः अंशाः सन्ति। ते च कारिका, वृत्तयः, उदाहरणानि इति। अनेककविकृतिभ्यः आनन्दवर्धनः उदाहरणानि स्वीकृतवान्। परन्तु स कारिकां वृत्तिं च स्वयम् एव रचितवान्। केचन कथयन्ति यत् आनन्दवर्धनः कस्यचित् अन्यस्य अज्ञातनाम्नः कृतिभ्यः कारिकाम् अपि स्वीकृतवान्। केवलं वृत्तिम् एव आनन्दवर्धनः रचितवान्। अत्र ग्रन्थे १२९ कारिकाः सन्ति। अत्र चत्वारः उद्योताः सन्ति। प्रथमे उद्योते ध्वनिविरोधिमतं निराकृत्य काव्यस्य आत्मानं ध्वनिम् उपस्थापितवान्। ततःपरं वस्तुध्वनिम्, अलङ्कारध्वनिम्, रसध्वनिं च प्रतिपादितवान्। पुनश्च ध्वनिः द्विविधः भवति। यथा- विवक्षितान्यपरवाच्यध्वनिः, अविवक्षितवाच्यध्वनिः इति। अत्र ध्वनेः विभागद्वयम् उदाहरणमाध्यमेन प्रतिपादितवान्। द्वितीये उद्योते अविवक्षितवाच्यध्वनेः भेदः, प्रेयसः रसध्वनेः भेदः, गुणालङ्कारयोः भेदः इति एते विषयाः आलोचिताः सन्ति। तृतीये उद्योते रीतिवृत्त्योः आलोचनं कृतम्। चतुर्थे उद्योते कविप्रतिभायाः गुणीभूतव्यङ्ग्यकाव्यस्य च आलोचनम्।

ध्वनिप्रस्थानस्य प्रथमः आचार्यः आनन्दवर्धनः। अयम् एव आचार्यः ध्वनिसम्प्रदायम् आरब्धवान्। ध्वन्यालोककारात् पूर्ववर्त्तिनः आचार्याः अलङ्कारम्, रीतिम्, गुणम् काव्यस्य आत्मानम् उक्तवन्तः। तेषु प्रथमः ध्वन्यालोककारः ध्वनिं काव्यस्य आत्मानं मन्यते। तिसृभिः शक्तिभिः शब्दः अर्थं प्रतिपादयति। ताश्च अभिधा, लक्षणा, तात्पर्यम् इति। एषा शक्तित्रयव्यतिरिक्ता काचित् व्यञ्जना वृत्तिः भवति। ध्वनिवादे व्याकरणप्रसिद्धस्य स्फोटतत्त्वस्य स्वीकारः अस्ति। काव्ये रीतिगुणालङ्काराणां स्थाननिर्णयं कृत्वा ध्वनिं प्रतिपादितवान्। आनन्दवर्धनस्य मते गुणादिकं केवलं वाच्यवाचकचारुत्वहेतुं व्यतिरिक्तं न किमपि अस्ति। काव्ये शब्दस्य अर्थस्य च स्वकीयप्राधान्यतां परित्यज्य वाच्यातिरिक्तं व्यङ्ग्यार्थं प्रतिपादयति, स ध्वनिः। तदुक्तम्-

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।

व्यङ्ग्यः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।। "इति

ध्वनिवादे गुणरीत्यलङ्कारादयः सर्वे एव रसपर्यवसायिनः। ध्वन्यालोककारस्य मतेन प्रभावितः अभिनवगुप्तः लोचनटीकां लिखितवान्।

## पाठगतप्रश्नाः-१

१. ध्वन्यालोककारस्य समयः कः।

२. ध्वन्यालोककारस्य देशः कः।

३. ध्वन्यालोककारस्य पितुः नाम किम्।

४. आनन्दवर्धनः कं ग्रन्थं लिखितवान्।

५. ध्वनिसम्प्रदायस्य प्रवर्त्तकः कः।

६. ध्वन्यालोके कति कारिकाः सन्ति।

## २१.२) अप्पयदीक्षितः

अलङ्काराकाशे आलङ्कारिकेषु अग्रगण्यः अप्पयदीक्षितः भवति। अयम् आचार्यः न केवलम् अलङ्कारशास्त्रे निपुणः भवति अपि तु इतरशास्त्रे अपि अस्य नैपुण्यं नितरां विद्यते। प्रायः सर्वस्मिन् शास्त्रे अस्य महाभागस्य ग्रन्थाः विद्यन्ते। अप्पयदीक्षितः साहित्यिकः, अद्वैती, विशिष्टाद्वैती, वैयाकरणः, आलङ्कारिकः, कविश्च आसीत्। प्रायः आचार्येण शतं ग्रन्थाः लिखिताः। तेषु अलङ्कारसम्बन्धिग्रन्थत्रयं विद्यते। अप्पयदीक्षितः, अप्पदीक्षितः, अप्पय्यदीक्षितः इति त्रिविधैः नामभिः संस्कृतजगति परिचितो भवति। जगन्नाथस्य रसगङ्गाधरग्रन्थे अपि त्रिविधं नाम एव श्रूयते।

**देशः** - अप्पयदीक्षितस्य जन्म दक्षिणभारते संजातम्। अयम् अप्पयदीक्षितः तामिळनाडु - अन्तर्गत-आर्काड्मण्डलस्थिते अडयप्पलं नाम्नि ग्रामे जन्म प्राप्तवान्। अप्यदीक्षितस्य देशः तामिळनाडुप्रदेशः आसीत्।

**कालः** - अप्पयदीक्षितस्य कालस्तु सप्तदशशतकम् आसीत्। आलङ्कारिकः जगन्नाथः अप्पयदीक्षितविरचितस्य चित्रमीमांसाग्रन्थस्य खण्डनं कृतवान्। एतेन ज्ञायते यत् अप्पयदीक्षितस्य जगन्नाथपूर्ववर्त्तिता आसीत्। अप्पयदीक्षितः प्रथमस्य वेङ्कटस्य निर्देशेन कुवलयानन्दनामकग्रन्थं रचितवान्। प्रथमवेङ्कटस्य कालस्तु १५८६- १६१३ख्रीष्टाब्दः। स एव कालः अप्पयदीक्षितस्य इति अनुमीयते। परन्तु तस्मिन् वंशे अप्पय इति नाम्ना बहवः आसन्। तस्मात् प्रकृताप्पयदीक्षितस्य कालनिर्धारणं तु दुष्करम्।

**वंशपरिचयः** - रङ्गराजाध्वरीन्दस्य पुत्रः अप्पयदीक्षितः। अयं भारद्वाजवंशोत्पन्नः आसीत्। स्वयमेव लिखति कुवलयानन्दे -

"इति श्रीमदद्वैतविद्याचार्य-श्रीमद्भरद्वाजकुल-जलधिकौस्तुभ-श्रीरङ्गराजाध्वरीन्द्र-वरसूनोः श्रीमदप्पयदीक्षितस्य कृतिः कुवलयानन्दः समाप्तः।" इति। अप्पयदीक्षितस्य सर्वे पितृपितामहादयः श्रोत्रियाः ज्योतिष्टोमादियागानाम् आहर्तारः सामवेदिनः आसन्। अद्वैतिनः अपि भूत्वा प्रायः शिवभक्तिपरायणाः आसन्। अप्पयदीक्षितस्य पितामहः आचार्यदीक्षितः आसीत्। अप्पयदीक्षितस्य आश्रयदाता वेङ्कटराजः आसीत्।

**कृतिः** - बहुभिः विश्वसनीयैः प्रमाणैः प्रतीयते यत् अप्पयदीक्षितस्य प्रायः शतं ग्रन्थाः विद्यन्ते। इतोऽपि अधिकसंख्याका एव ग्रन्थाः विद्यन्ते इति केचित् मन्यन्ते। अप्पयदीक्षितस्य वेदान्तसम्बन्धिग्रन्थाः, मीमांसासम्बन्धिग्रन्थाः, व्याकरणसम्बन्धिग्रन्थाः, शिवाद्वैतसम्बन्धिग्रन्थाः, स्तोत्रसम्बन्धिग्रन्थाः, अलङ्कारसम्बन्धिग्रन्थाः, काव्यसम्बन्धिग्रन्थाः च विद्यन्ते।

वेदान्तविषयकग्रन्थाः - १. सिद्धान्तलेशसंग्रहः, २. न्यायरक्षामणिः, ३. कल्पतरुपरिमलः, ४. न्यायमुक्तावली, ५. न्यायमणिमाला, ६. न्यायमञ्जरी, ७. अधिकरणपञ्चिका ८. तत्त्वमुक्तावली, ९. मणिमालिका इत्यादयः।

शिवाद्वैतपरायणाः ग्रन्थाः - १. शिखरिणी, २.रामायणतात्पर्यसङ्ग्रहः, ३. भारततात्पर्यसङ्ग्रहः, ४.शिवपूजाविधिः, ५.आनन्दलहरी, ६. शिवार्चनचन्द्रिका, ७. शिवाद्वैतनिर्णयः इत्यादयः ग्रन्थाः।

मीमांसाशास्त्रपरकग्रन्थाः - १. विधिरसायनम्, २. सुखोपयोजिनी, ३. उक्रपराक्रमः, ४. चित्रापटम्, ५. तान्त्रिकमीमांसा, ६. धर्ममीमांसापरिभाषा इत्यादयः।

व्याकरणे एकः ग्रन्थः विद्यते। तच्च पाणिनीयतन्त्रवादनक्षत्रमाला इति। काव्यशास्त्रे यादवाभ्युदयव्याख्या इति ग्रन्थः विद्यते। अलङ्कारशास्त्रे प्रायः चत्वारः ग्रन्थाः विद्यन्ते। ते च १. कुवलयानन्दः, २. चित्रमीमांसा, ३. वृत्तिवार्तिकम्, ४. लक्षणरत्नावली इति।

स्तोत्रसम्बन्धिग्रन्थाः - १. वरदराजस्तवः, २. इदंस्तवव्याख्या, ३. आत्मार्पणस्तुतिः, ४. मानसोल्लासः, ५. आदित्यस्तोत्रम्, ६. गङ्गाधराष्टकम् इत्यादयः। अत्र केषाञ्चित् प्रसिद्धग्रन्थानां नामोल्लेखः कृतः। प्रकृतपाठे आलङ्कारिकाणां विषये चर्चा भवति। अतः अलङ्कारशास्त्रसम्बद्धग्रन्थानां किञ्चित् सामान्येन परिचयः प्रदीयते। अप्पयदीक्षितः जयदेवविरचितं चन्द्रालोकग्रन्थं समाश्रित्य कुवलयानन्दनामकग्रन्थं प्रणीतवान्। अलङ्कारस्य उपरि टीकाविशेषः अयं ग्रन्थः। प्रायः ग्रन्थे २७३ श्लोकाः सन्ति। ग्रन्थकारः स्वयं कथयति यत् कुवलयानन्दग्रन्थे चन्द्रालोके विद्यमानान् अलङ्कारान् गृहीत्वा केचित् नवीनाः अलङ्काराः अपि प्रतिपाद्यन्ते। चन्द्रालोके शतम् अलङ्काराः विद्यन्ते। तैः अलङ्कारैः सह पञ्चदश नवीनाः अलङ्काराः प्रतिपादिताः सन्ति। तच्च प्राह-

"येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः।

प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते।।" इति

अत्र अर्थालङ्कारस्य उपरि चर्चा विद्यते। राज्ञः वेङ्कटस्य निर्देशेन एव कुवलयानन्दग्रन्थं लिखितवान्।

चित्रमीमांसा इति अयम् उत्कृष्टग्रन्थः विद्यते। अत्र केवलं द्वादशानाम् अलङ्काराणां वर्णनं विद्यते। अत्र कारिकायाः रचनायाः परं गद्यवृत्त्या अन्येषां प्राक्तनानाम् आचार्याणां मतानि उपस्थापितवान्। क्वचित् क्वचित् मतानां खण्डनमपि कृतम् अस्ति। काव्यस्य ध्वनिः, गुणीभूतव्यङ्ग्यम्, चित्रम् इति त्रिविधः विभागः विद्यते। इतः परम् उपमालङ्कारस्य विचारं कृतवान्। द्वादश अलङ्काराः उपमान्तर्गताः इति दर्शितम्। परन्तु जगन्नाथः रसगङ्गाधरे चित्रमीमांसायाः खण्डनं कृतवान्। पुनश्च जगन्नाथः चित्रमीमांसाखण्डनम् इति पुस्तकं विरच्य दीक्षितस्य मतं खण्डितवान्।

वृत्तवार्तिकम् इत्यपि अपरः अलङ्कारग्रन्थः विद्यते। अस्मिन् ग्रन्थे परिच्छेदद्वयम् अस्ति। अत्र अभिधालक्षणयोः विषये चर्चा भवति। अत्र व्यञ्जनाविषये तु न किमपि प्रोक्तम् अस्ति।

केचन प्रातिपादयन्ति यत् लक्षणरत्नावली इति अपरः अलङ्कारग्रन्थः विद्यते। अत्र नान्दीपाठः, सूत्रधारः, पूर्वरङ्गम्, प्रस्तावना इति एते विषयाः चर्चिताः।

## पाठगतप्रश्नाः-२

७. अप्पयदीक्षितस्य कालः कः।

८. अप्पयदीक्षितस्य देशः कः।

९. अप्पयदीक्षितस्य पितुः नाम किम्।

१०. अप्पयदीक्षितस्य एकस्य अलङ्कारग्रन्थस्य नाम लिखत।

११. किम् आधारीकृत्य कुवलयानन्दः रचितः।

१२. कुवलयानन्दे कति श्लोकाः सन्ति।

१३. वृत्तवार्तिके कति परिच्छेदाः सन्ति।

१४. चित्रमीमांसा इति ग्रन्थस्य खण्डनपरकग्रन्थः कः।

१५. अप्पयदीक्षितस्य आश्रयदाता कः।

---

## २१.३) मम्मटः

आलङ्कारिकेषु अग्रगण्यः आचार्यः अयम्। भारतीयसंस्कृतसाहित्येषु एकोऽपि छात्रः न विद्यते, यः मम्मटं न जानाति। ध्वनिकारात् परम् अयम् आचार्यः भवति। अलङ्कारसाहित्ये यावन्मम्मटस्य उदयो न जातः तावत्काले ध्वनिविरोधिनः ध्वनिविरोधिग्रन्थान् लिखितवन्तः। परं मम्मटेन ध्वनिविरोधिनः तथा अधिक्षिप्ताः यथा पुनस्ते ध्वनिं विरोद्धुं साहसं न अकुर्वन्। अत एव तु अयम् काव्यप्रकाशकर्ता मम्मटः वाग्देवतावतारः ध्वनिप्रस्थानस्य परमाचार्यः उच्यते। संस्कृतजगति राजानक इति उपाधिना परिचितः भवति। मम्मटस्य देशकालकृतिविषये किञ्चित् आलोच्यते।

**देशः**- अयं मम्मटाचार्यः काश्मीरवासी भोजराजात् परवर्त्ती च भवति। मम्मट इति नाम राजानक इति उपाधिश्च प्रमाणयति यत् मम्मटाचार्यः काश्मीरवासी आसीत्।

**कालः**- ध्वनिकारस्य आनन्दवर्धनस्य ध्वनिप्रस्थानं सुदृढतया उपस्थापयितुं मम्मटः काव्यप्रकाशग्रन्थं लिखति स्म। एतेन आगतं यत् आनन्दवर्धनात् परवर्त्ती मम्मटाचार्यः। मम्मटाचार्यः स्वग्रन्थे अभिनवगुप्तस्य मतानि उल्लिखितवान्। अभिनवगुप्तः एकादशशतके आसीत्। अतः ततः अपि परवर्त्ती मम्मटाचार्यः। पद्मगुप्तस्य नवसाहसांकचम्पूकाव्ये स्थितस्य भोजराजप्रशंसाश्लोकस्य उद्धरणं काव्यप्रकाशे कृतम् अस्ति। नवसाहसाङ्कचम्पूकाव्यस्य रचनाकालः एकादशशतकम्। अयम् एव कालः मम्मटाचार्यस्य अपि। भोजराजात् परवर्त्ती अयम् आचार्यः। भोजराजस्य शासनकालः ९९६ ई. - १०५१ ई. आसीत्। अत एव मम्मटाचार्यस्य कालः एकादशशतकम्।

**वंशपरिचयः** - मम्मटस्य पितुः नाम जैयटः इति। मम्मटस्य अनुजौ कैयटोव्वटौ। अयं मम्मटाचार्यः नैषधीयचरितग्रन्थस्य रचयितुः मातुलः आसीत्। मूलतः मम्मटाचर्यः काश्मीरवासी आसीत्।

परन्तु संस्कृतशिक्षायाः प्राप्त्यर्थं संस्कृतशिक्षायाः पीठस्थानं वाराणसीम् आगतवान्। एवञ्च वाराणस्याम् उपविश्य एव काव्यप्रकाशग्रन्थं रचितवान्।

**कृतिः** - मम्मटस्य काव्यप्रकाशः इति एका एव कृतिः विद्यते। तत्रापि मम्मटः सम्पूर्णकाव्यप्रकाशग्रन्थं न रचितवान्। काव्यप्रकाशः दशमपरिच्छेदगतपरिकरालङ्कारावधिः मम्मटेन कृतः, ततः अवशिष्टभागः अल्लटनाम्ना केनचित् विदुषा कृतः अस्ति। तदेव आह-

"कृतोऽयं मम्मटाचार्यैर्ग्रन्थः परिकरावधिः।

प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा"॥ इति

मम्मटस्य विद्वत्तां प्रमाणयितुं तत्काव्यप्रकाश एव अलम्। मम्मटस्य अपरा कृतिः शब्दव्यापारवृत्तिः इति ग्रन्थः। मम्मटाचार्यः सङ्गीतरत्नमाला इत्यपि एकं ग्रन्थं रचितवान्। परन्तु एतौ द्वौ ग्रन्थौ सम्प्रति न एव उपलभ्येते। पुनश्च ग्रन्थद्वयस्य रचयिता न मम्मटः इत्यपि ऐतिहासिकाः प्रवदन्ति। काव्यप्रकाशे दश उल्लासाः सन्ति। अस्मिन् ग्रन्थे प्रायः १४३ कारिकाः सन्ति। वस्तुतस्तु मम्मटाचार्यः ध्वनिवादस्य समर्थनाय काव्यप्रकाशग्रन्थं रचितवान्। काव्यप्रकाशस्य त्रयः अंशाः सन्ति। यथा- कारिका, वृत्तिः, उदाहरणम् इति। भरतस्य काश्चित् कारिकाः स्वकीयग्रन्थे निवेशितवान्। अवशिष्टाः कारिकाः स्वयम् एव लिखितवान्। वृत्तिस्तु मम्मटेन स्वयम् एव रचिता। उदाहरणानि परेषां पुस्तकात् स्वीकृतानि सन्ति। प्रायः षट् कारिकाः भरतस्य नाट्यशास्त्रात् स्वीकृतवान्। अतः काव्यप्रकाशस्थकारिकाः भरतेन रचिताः सन्ति इति ऐतिहासिकाः विवदन्ते। परन्तु मतमिदं भ्रान्तम् अस्ति। मम्मटाचार्यः आनन्दवर्धनस्य अभिनवगुप्तस्य च मतेन प्रभावितः सन् ध्वनिसिद्धान्तस्य सुदृढकरणाय ग्रन्थम् एकं रचितवान्। मम्मटमतेन काव्यस्य मूलं व्यञ्जना भवति। काव्यप्रकाशस्य प्रथमोल्लासे काव्यरचनायाः उद्देश्यम्, काव्यलक्षणम्, काव्यभेदः इति एते विषयाः चर्चिताः। द्वितीयोल्लासे शब्दवृत्तेः अर्थवृत्तेः च वर्णनम् अस्ति। तृतीयोल्लासे व्यञ्जनावृत्तेः सुविस्तृतं वर्णनम् अस्ति। चतुर्थोल्लासे ध्वनिभेदः रसस्वरूपालोचनम् इति एते विषयाः चर्चिताः सन्ति। पञ्चमोल्लासे ध्वनिगुणीभूतव्यङ्गकाव्ययोः वर्णनम्, तत्तद्भेदाः वर्णिताः सन्ति। षष्ठोल्लासे चित्रकाव्यस्य वर्णनम् अस्ति। सप्तमोल्लासे दोषाणां वर्णनम्, अष्टमोल्लासे गुणानां वर्णनम्, नवमोल्लासे शब्दालङ्काराणां वर्णनम्, दशमोल्लासे अर्थालङ्काराणां वर्णनम् अस्ति। काव्यप्रकाशस्य प्रसिद्धिः महती विद्यते। संस्कृतजगति श्रीमद्भगवद्गीतायाः अधिकाः टीकाः उपलभ्यन्ते। ततः परं मम्मटविरचितस्य काव्यप्रकाशस्य अधिकाः टीकाः विद्यन्ते। प्रायः संस्कृतेन ७५ टीकाः सन्ति। संस्कृतेतरभाषायाम् अपि बह्व्यः टीकाः सन्ति। एतेन काव्यप्रकाशस्य लोकप्रसिद्धिं ज्ञातुं शक्यते।

## पाठगतप्रश्नाः-३

१६. मम्मटस्य उपाधिः का वर्तते।

१७. मम्मटस्य कालः कः।

१८. मम्मटस्य देशः कः।



१९. मम्मटस्य पितुः नाम किम्।

२०. मम्मटस्य ग्रन्थस्य नाम किम्।

२१. काव्यप्रकाशे कति उल्लासाः सन्ति।

२२. काव्यप्रकाशे कति कारिकाः सन्ति।

२३. मम्मटः कुत्र अध्ययनं कृतवान्।

## २१.४) भोजराजः

अलङ्काराकाशे भोजराजः इति नाम तु अतीव प्रसिद्धम्। महाराजः भोजः धारानगरशासकः आसीत्। राजकार्येण सह शास्त्रस्य चर्चाम् अकुर्वन् इमे महाभागाः। महाराजस्य भोजस्य कविजनप्रियत्वं तु सर्वजनप्रसिद्धं विद्यते। महाराजभोजस्य शास्त्रेषु महती प्रीतिः आसीत्। अत एव स्वकीयराजसभायां विदुषः आह्वानं सदा भवति स्म। सर्वदा एव राजसभायां शास्त्रचर्चा भवति स्म। एतैः कर्मभिः साकं स्वयम् अपि शास्त्राध्ययनम् अकरोत्। एवञ्च सरस्वतीकण्ठाभरणम्, शृङ्गारप्रकाशः, रामायणचम्पूः इति एते ग्रन्थाः रचिताः आसन्। अत एव संस्कृतनभसि अयं महापण्डितः एकम् उज्ज्वलपूर्णं नक्षत्रम्।

**देशः** - प्राचीनकाले शिलाखण्डादिषु महाराजानां शासनकालः वंशपरिचयादयः च स्पष्टतया लिख्यन्ते। अयं राजा सन् कविः भवति। अतः महापण्डितस्य भोजस्य देशकालनिर्णये क्लेशः न विद्यते। महाराजः भोजः मालवदेशस्य धारानगरशासकः परमारवंश्यश्च आसीत्। अतः महाराजभोजस्य देशः मालवदेशः आसीत् इति निश्चप्रचम्।

**कालः** - अयं राजा १०१८ ईशवीये सिंहासनारूढो भूत्वा १०६३ पर्यन्तं शासनकार्यं चालितवान्। अतः भोजस्य समयः एकादशशतकम् आसीत्। मालवेशः स काश्मीरकानन्तराजसमकालिक इति।

"स च भोजनरेन्द्रश्च दानोत्कर्ष विश्रुतौ।

सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कविबान्धवौ।"

इति राजतरङ्गिणीवचनात् ज्ञायते। अनन्तराजश्च १०२० – ११५८ मितवैक्रमाब्दानभितः स्थितिमान् इति राजतरङ्गिणीतः ज्ञायते। एतदतिरिक्तं १०७८ मितवैक्रमाब्दे कृतं भोजस्य दानपत्रम् अपि लभ्यते इति तस्य अपि स्थितिकालः १०३० – १११० मितवैक्रमाब्दान्तरालवर्त्ती इति समम् अनुमीयते।

**कृतिः** - जगति राजकार्यं कुर्वन्तः शास्त्राध्ययनं कृत्वा शास्त्रादिरचनां कृतवन्तः इति एतादृशाः मानवाः दुर्लभाः सन्ति। भोजराजस्य सरस्वतीकण्ठाभरणम्, शृङ्गारप्रकाशश्च काव्यसम्बन्धौ ग्रन्थौ। सरस्वतीकण्ठाभरणे हि पञ्च परिच्छेदाः सन्ति। तत्र प्रथमे परिच्छेदे दोषगुणयोः विवेचनम् अस्ति। तत्र पदगताः षोडश, वाक्यगताः षोडश, वाक्यार्थगताः षोडश इति अष्टाचत्वारिंशद्दोषाः विवेचिताः सन्ति। एवमेव शब्दगताः चतुर्विंशतिः अर्थगताः चतुर्विंशतिः इति अष्टाचत्वारिंशद्गुणाः सन्ति। द्वितीये परिच्छेदे

चतुर्विंशतिः शब्दालङ्काराः, तृतीये परिच्छेदे अर्थालङ्काराः, चतुर्थे उभयालङ्काराः, पञ्चमे हि रस-भाव-सन्धि-वृत्तीनां निरूपणम्। रत्नेश्वरः सरस्वतीकण्ठाभरणस्य रत्नदर्पणाख्यां व्याख्यां रचितवान्। एषा व्याख्या तृतीयपरिच्छेदपर्यन्तम् अस्ति। चतुर्थस्य हि परिच्छेदस्य टीका जगद्धरविरचिता, चतुर्थपञ्चमयोः जीवानन्दप्रणीता व्याख्या च लभन्ते।

शृङ्गारप्रकाशः अस्य अपरः ग्रन्थः विद्यते। अत्र हि षट्त्रिंशत्प्रकाशाः सन्ति। तत्र हि आद्याष्टप्रकाशेषु शब्दार्थविषयकवैयाकरणमतानि निरूपितानि सन्ति। नवमे गुणाः, दशमे दोषाः, एकादशे महाकाव्यम्, द्वादशे नाट्यञ्च सप्रपञ्चं निरूपितानि। शेषेषु चतुर्विंशतिप्रकाशेषु साङ्गोपाङ्गं रसाः विवेचिताः सन्ति। भोजमते तु शृङ्गार एव सर्वरसेश्वरः। यथोक्तम्-

"शृङ्गारवीरकरुणाद्भुतरौद्रहास्यबीभत्सवत्सलभयानकशान्तनाम्नः।

अम्नासिषुर्दश रसान् सुधियो वयं तु शृङ्गारमेव रसनाद्रसनाम नाम।।" इति।

किन्तु यः शृङ्गारः स न केवलं युनोः परस्पराकाङ्क्षात्मा अपि तु धर्मार्थकाममोक्षाख्यचतुर्विधभेदात्मकः अस्ति। काव्यशास्त्रकानने हि शृङ्गारप्रकाशः सर्वाधिकदीर्घकायं पुष्पं सर्वोत्कृष्टम्। भोजराजस्य चम्पूरामायणम् इति काव्यम् अपि विद्यते। परन्तु अलङ्कारसम्बन्धग्रन्थो न भवति। अतः तस्य चर्चादिकं प्रकृतपाठे न क्रियते।

## पाठगतप्रश्नाः-४

२४. भोजराजस्य देशः कः।

२५. भोजराजस्य स्थितिकालः कः।

२६. सरस्वतीकण्ठाभरणम् इत्यस्य ग्रन्थस्य रचयिता कः।

२७. सरस्वतीकण्ठाभरणे कति परिच्छेदाः सन्ति।

२८. शृङ्गारप्रकाशे कति प्रकाशाः सन्ति।

२९. भोजमते काव्ये कः रसः प्रधानो भवति।

३०. चम्पूरामायणस्य कर्ता कः।

## २१.५) विश्वनाथः

संस्कृतालङ्कारसाहित्ये मम्मटभट्टात् परं कविराजः विश्वनाथः एव अत्यन्तं प्रसिद्धः आसीत्। एवञ्च मम्मटस्य काव्यप्रकाशात् परम् अलङ्कारसाहित्ये कविराजविश्वनाथस्य साहित्यदर्पणः सर्वाधिकः लोकप्रियः ग्रन्थः भवति। सर्वशास्त्रस्वतन्त्रस्य कविराजविश्वनाथस्य जन्मसमयादिनिरूपणे स्फुटतरं तादृशं किम् अपि प्रमाणं न उपलभ्यते तथापि तन्निरूपणं न अतीव कठिनम् इव प्रतिभाति। अत एव सम्प्रति विश्वनाथस्य देशकालकृतिविषयकं किञ्चित् आलोचनं क्रियते।

**देशः** - कविराजः विश्वनाथः उत्कलदेशीयः आसीत्। यतो हि विश्वनाथः श्रीनरसिंहस्य सभापण्डितः सन्धिविग्रहकश्च आसीत्। अस्य पितामहोऽपि श्रीनरसिंहाख्यस्य नृपतेः मुख्यसभास्थः आसीत्। श्रीनरसिंहस्य राज्यम् उत्कलदेशः आसीत्। अत एव विश्वनाथस्य वासस्थानम् उत्कलप्रान्तम् इति।

**कालः** - कविराजः विश्वनाथः मम्मटात् अर्वाचीनः आसीत्। यतो हि विश्वनाथविरचिते साहित्यदर्पणनामकग्रन्थे मम्मटोक्तकाव्यलक्षण्स्य खण्डनं दृश्यते। विश्वनाथः जगन्नाथात् प्राचीनः आसीत्। यतो हि जगन्नाथः स्वकीयरसगङ्गाधरनामकग्रन्थे लिखति -" यत्तु रसवदेव काव्यमिति साहित्यदर्पणे निर्णीतं तन्न" इति। मम्मटजगन्नाथयोः मध्यवर्ती कालः विश्वनाथस्य भवति। साहित्यदर्पणस्य चतुर्थपरिच्छेदे यवनाधिपतेः अलावुद्दीनस्य स्मारकः श्लोकः -

"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।

अल्लावुद्दीननृपतौ न सन्धिर्न च विग्रहः॥"

इति एवं श्लोकः विलसति। अनेन श्लोकेन अल्लाउद्दीनखिलजी स्मृतः भवति। अयं नृपतिः १३१० ईशवीये मृतः भवति। इत्थञ्च यदि निष्कर्षरूपेण विविच्यते तदा एकादशद्वादशत्रयोदशशताब्दीसम्भूताः मम्मट-श्रीहर्ष-जयदेवप्रभृतयः। तेषां वाक्यानि साहित्यदर्पणे "तददोषौ शब्दार्थौ" "धन्यासि वैदर्भि" "कदली कदली" इत्यादिना स्पष्टमेव उद्धृतानि सन्ति। पञ्चदशसमुद्भूतेन काव्यप्रदीपकृता गोविन्दठाक्कुरेण तददोषौ शब्दार्थौ इति विचारवेलायां "अर्वाचीनास्तु" इत्यादिना विश्वनाथमतम् एव उपस्थापितम् आसीत्। एभिः विचार्यमाणैः विश्वनाथकविराजस्य समयः चतुर्दशशतकं मन्यते।

**वंशपरिचयः** - विश्वनाथः समृद्धकुलसम्भवश्च आसीत्। अस्य कुलं पाण्डित्ये प्रसिद्धम्। विश्वनाथस्य पितुः नाम चन्द्रशेखरः आसीत्। विश्वनाथस्य पिता चन्द्रशेखरः पुष्पमाला, भाषार्णवश्च इति पुस्तकद्वयं रचितवान्। स्वयम् एव विश्वनाथः साहित्यदर्पणग्रन्थे कथयति -

"श्रीचन्द्रशेखरमहाकविचन्द्रसूनुश्रीविश्वनाथकविराजकुलं प्रबन्धम्।

साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्त।। "इति। चन्द्रशेखरस्य पुत्रः विश्वनाथः इति तु अयं श्लोकः एव प्रमाणम्। विश्वनाथस्य पितामहः नारायणदासः आसीत्। नारायणदासस्य पितामहत्वम् अपि साहित्यदर्पणस्थश्लोकतः अवगम्यते। तथा हि - " यदाहुः - श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराजश्रीनरसिंहदेवसभायां धर्मदत्तं स्थगयन्तः सकलहृदयगोष्ठीगरिष्ठकविपण्डितास्मत्पितामहश्रीनारायणदासपादाः" इति। विश्वनाथस्य पितामहस्य भ्राता चण्डीदासः आसीत्। चण्डीदासः काव्यप्रकाशस्य दीपिकानामटीकां रचितवान्। सन्धिविग्रहकः इति विशेषणं विश्वनाथस्य आसीत्। एतेन अवगम्यते यत् जात्या ब्राह्मणः अयम् आसीत्।

**कृतिः** - प्रकाण्डविद्वत्कुले समुत्पन्नः विश्वनाथः अपि सर्वशास्त्रस्वतन्त्रः महान् विद्वान् च आसीत्। अयं पण्डितप्रवरः न केवलं संस्कृतभाषां जानाति स्म, अपि तु अष्टादश भाषाः जानाति स्म। अस्य "अष्टादशभाषावारविलासिनीभुजङ्ग" इति उपाधिः नानाभाषाभिज्ञत्वं समर्थयति। विश्वनाथस्य

कृतयः हि साहित्यदर्पणः, काव्यप्रकाशदर्पणः, राघवविलासमहाकाव्यम्, कुवलयाश्वचरितकाव्यम्, प्रभावतीपरिणयनाटिका, चन्द्रकलानाटिका, नरसिंहविजयकाव्यम्, प्रशस्तिरत्नावली च इति।

अस्य कृतिषु प्रसिद्धो ग्रन्थः साहित्यदर्पणः। अत्र काव्यस्य नाट्यस्य च सर्वाङ्गीणं विवेचनम् अस्ति। साहित्यदर्पणो हि काव्यशास्त्रस्य रत्नभूतः ग्रन्थः भवति। अत्र हि ग्रन्थे दश परिच्छेदाः सन्ति। तत्र प्रथमे परिच्छेदे काव्यविवेकः, द्वितीये परिच्छेदे शब्दशक्तयः, तृतीये परिच्छेदे रसनिरूपणम्, चतुर्थे परिच्छेदे ध्वनिविवेकः, पञ्चमे परिच्छेदे व्यञ्जनावृत्तिनिरूपणम्, षष्ठे काव्यविभागः, सप्तमे परिच्छेदे दोषप्रपञ्चः, अष्टमे परिच्छेदे गुणनिरूपणम्, नवमे परिच्छेदे रीतिनिरूपणम्, दशमे परिच्छेदे शब्दार्थालङ्कारविचार इति विवेच्यविषयाः सन्ति। काव्यशास्त्रविषये वस्तुतस्तु विश्वनाथो मम्मटम् एव अनुसरति किन्तु मम्मटं यत्र तत्र दूषयति अपि। विशेषतः काव्यप्रकाशकारोक्तकाव्यलक्षणं खण्डयित्वा "वाक्यं रसात्मकं काव्यम्" इति स्वमतं लक्षणं स्थापयति। साहित्यदर्पणस्य उपरि बहव्यः टीकाः समागताः सन्ति। यथा- आनन्ददासस्य लोचनाख्या टीका, महेश्वराख्यस्य विज्ञप्रिया टीका, जीवानन्दविद्यासागरस्य विमला टीका, कृष्णमोहनस्य लक्ष्मीः टीका, लोकमणिदाहालाख्यस्य कला टीका। साहित्यदर्पणस्य परवर्तिग्रन्थेषु प्रभावः सुतरां स्पष्टः। रसविवेचने अलङ्कारनिरूपणे काव्यभेदविवेके च तत्पश्चाद्वर्त्तिनः साहित्यदर्पणम् एव उपजीवन्ति।

## पाठगतप्रश्नाः-५

३१. विश्वनाथः कुत्रत्यः।

३२. विश्वनाथस्य स्थितिकालः कः।

३३. साहित्यदर्पणग्रन्थस्य रचयिता कः।

३४. विश्वनाथस्य पितुः नाम किम्।

३५. विश्वनाथस्य पितामहस्य नाम किम्।

३६. साहित्यदर्पणे कति परिच्छेदाः सन्ति।

३७. विश्वनाथस्य पिता कं ग्रन्थं रचितवान्।

३८. चण्डीदासः कं ग्रन्थं रचितवान्।

## २१.६) जगन्नाथः

संस्कृतजगति आलङ्कारिकेषु अन्यतमः अयम् आचार्यः। संस्कृतसाहित्ये बहुविधाः ग्रन्थाः जगन्नाथेन विरचिताः सन्ति। रसगङ्गाधरनामकग्रन्थं विरच्य जगन्नाथः आलङ्कारिकेषु अग्रगण्यः भवति। अयं जगन्नाथः आचार्यः विविधविषयेषु महान् पण्डितः आसीत्। पण्डितराजस्य जगन्नाथस्य अभ्युदयः

काव्यशास्त्रे नव्यपरम्परोद्द्योतकः। तस्य हि रसगङ्गाधरः काव्यसिद्धान्तान् नव्यन्यायपरम्परया व्याख्याति।

**देशः** -पण्डितराजः कुत्र जातः, कदा वा जात इति यथातथ्येन वक्तुं न शक्यते। अयं कोणसीमास्थानस्य त्रिलिङ्गब्राह्मणः आसीत्। आन्ध्रप्रदेशस्य पूर्वगोदावरीजनपदे इदं स्थानं समापतति। केचित् वदन्ति यत् पण्डितराजः गुण्टूरजनपदस्य तेनालीप्रखण्डे दाउनूरूग्रामे आसीत्। इदम् अनुमानं तदीयां कुलपरम्पराम् आश्रित्य सम्भवति। प्रतीयते गुण्टूरजनपदात् पूर्वगोदावरीजनपदं पण्डितराजपूर्वजाः गोदावरीं गताः भवेयुः। किन्तु जगन्नाथस्य रसगङ्गाधरे पण्डितराजस्य पितुः वाराणस्याम् अवस्थितिः प्रमाणिता भवति। एवं पण्डितराजस्य जन्मभूमिः अथ च विद्याभूमिः वाराणसी तथा च कर्मभूमिः जयपुरम्, दिल्लीनगरम्, मधुपुरी, असमप्रदेशः, अन्ते पुनः वाराणसी इति।

**कालः** - स हि शाहजहानस्य सभापण्डित आसीत् इति तस्य शाहजहानसमकालिकत्वं भवति। उक्तञ्च -

"दिल्लीवल्लभापाणिपल्लवतले नीतं नवीनं वयः।

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः।

अन्यैर्नृपालैः परिदीयमानं शाकाय वा स्याल्लवणाय वा स्यात्। "इति।

शाहजाहांसम्राजस्य शासनकालः १६२८ – १६५८ ई. मन्यते। पण्डितराजजीवितमु इति अस्ति एकः तेलेगुग्रन्थः। तद्दिशा पण्डितराजस्य जन्मसमयः १६०० ई. वर्षे आसीत्। स स्वयमेव "दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः" इति कथयति इति मुगलप्रासादप्रवेशकाले स न्यूनम् अपि त्रिंशद्वर्षवयस्कस्तु आसीत्। तत्र तेन पञ्चदशवर्षाणि व्यतीतानि। यदा स देहलीं त्यक्तवान् तदा स पञ्चचत्वारिंशद्वर्षवयस्क आसीत् इति तस्य जन्म १६५५ मितवैक्रमाब्दम् इति अभितोऽनुमानं शक्यते। अत एव अयं जगन्नाथः सप्तदशशतकवर्त्ती आसीत्।

**वंशपरिचयः** - पण्डितराजो हि तैलङ्गो ब्राह्मणः आसीत्। अस्य पिता पेरुभट्टः आसीत्। अस्य माता लक्ष्मीदेवी।

विद्यावैभवम् - पण्डितराजपितुः गुरवः आसन् ज्ञानेन्द्रभिक्षुः, श्रीमहेन्द्रः, श्रीखण्डदेवः, अथ च शेषवीरेश्वरः।

"श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः

काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।। "

जगन्नाथः पितुः पेरुभट्टात् ज्ञानेन्द्रभिक्षोः सकलविद्यां पठितवान्। अस्य पिता पेरुभट्टः सर्वविद्याधरः आसीत्। पण्डितराजः अपि सर्वथा पितरम् एव अनुसरति स्म। अयं चापि पितुः आशिषा सर्वविद्याधरत्वम् आप्तवान्। प्रायः सर्वस्मिन् शास्त्रे जगन्नाथस्य पाण्डित्यम् अभावनीयं विद्यते।

**कृतिः** - संस्कृतजगति जगन्नाथस्य कृतिः अधिकाम् एव प्रशस्तिं प्राप्तवती। प्रायः सर्वस्मिन् शास्त्रे जगन्नाथस्य परिश्रमो विद्यते। जगन्नाथस्य कृतीनां विवरणं प्रस्तूयते।

१. गङ्गालहरी - द्विपञ्चाशत्पद्यबद्धा गङ्गास्तुतिः।

२. सुधालहरी - द्वात्रिंशत्पद्यात्मिका सूर्यस्तुतिः।

३. अमृतलहरी - एकादशश्लोककाया यमुनाप्रशस्तिः।

४. करुणालहरी - चतुष्षष्टिश्लोकमिता विष्णुस्तुतिः।

५. लक्ष्मीलहरी - एकचत्वारिंशत्पद्यात्मिका लक्ष्मीस्तुतिः।

६.यमुनावर्णनचम्पूः - चम्पूकाव्यविशेषः।

७. आसफविलासः - आसफखाँमहोदयस्य प्रशस्तिः।

८. प्राणाभरणम् - कामरूपाधीशस्य प्राणनारायणस्य प्रशस्तिः।

९. जगदाभरणम् - उदयपुराधीशराणाकर्णसिंहसूनोर्जगत्सिंहस्य प्रशस्तिः।

१०. चित्रमीमांसाखण्डनम् - अप्पयदीक्षितकृतस्य चित्रमीमांसाग्रन्थस्य खण्डनात्मकम् आलोचनम्।

११. मनोरमाकुचमर्दनम् - सिद्धान्तकौमुदीटीकायाः मनोरमायाः खण्डनम्।

१२. रसगङ्गाधरः - अपूर्णः अतिप्रौढः अलङ्कारशास्त्रग्रन्थः।

१३. भामिनीविलासः - कवितासङ्ग्रहविशेषः ग्रन्थः।

अत्र रसागङ्गाधरनामकस्य अलङ्कारग्रन्थस्य किञ्चित् आलोचनं क्रियते। रसगङ्गाधरग्रन्थे द्वे एव आनने दृश्येते। ग्रन्थश्च अयम् असम्पूर्णः अस्ति। अत्र हि काव्यस्वरूपम्, काव्यभेदाः, रसविवेकः, शब्दगुणानां लक्षणम्, अर्थगुणानां लक्षणम्, भावलक्षणम्, ध्वनिविवेकः, शक्तिविवेकः, अलङ्कारनिरूपणम्, इति एते विषयाः प्रतिपादिताः सन्ति।

जगन्नाथः कस्याञ्चन यवनयुवत्याम् आसक्तः जातिच्युतो भूत्वा ताम् उपमेये। तस्यां यवनयुवत्यां मृतायां जगन्नाथः राजाश्रयं परित्यज्य मथुराम् आयातः। तत्र तस्य १६७४ ई. मृत्युः अभवत्। मृत्योः पूर्वं प्रायश्चित्तं कर्त्तुम् अपि सन्नद्ध आसीत् परं तत्कालप्रसिद्धौ पण्डितौ भट्टजीदीक्षिताप्पय्यदीक्षितौ नानुमेनाते। तत्र कारणं तयोः जगन्नाथेन सह शास्त्रमतभेद एव उच्यते।

## पाठगतप्रश्नाः-६

३९. जगन्नाथस्य समयः कः।

४०. जगन्नाथस्य देशः कः।

४१. कः रसगङ्गाधरं रचितवान्।

४२. रसगङ्गाधरे कति आननानि।

४३. जगन्नाथस्य पितुः नाम किम्।

४४. जगन्नाथस्य मातुः नाम किम्।

## पाठान्तप्रश्नाः

१. आनन्दवर्धनस्य विषये लघुटिप्पणीं लिखत।

२. आनन्दवर्धनस्य देशकालकृतिविषये लघुटिप्पणीं लिखत।

३. ध्वन्यालोकस्य विषये लघुटिप्पणीं लिखत।

४. अप्पयदीक्षितस्य विषये लघुटिप्पणीं रचयत।

५. अप्पयदीक्षितस्य देशकालकृतिविषये लघुटिप्पणीं लिखत।

६. कुवलयानन्दस्य विषये लघुटिप्पणीं लिखत।

७. मम्मटाचार्यस्य विषये लघुटिप्पणीं रचयत।

८. मम्मटाचार्यस्य देशकालकृतिविषये लघुटिप्पणीं लिखत।

९. काव्यप्रकाशस्य विषये लघुटिप्पणीं रचयत।

१०. भोजराजस्य सम्बन्धे लघुटिप्पणीं लिखत।

११. भोजराजस्य देशकालकृतिविषये लघुटिप्पणीं लिखत।

१२. भोजराजस्य कृतिविषये लघुटिप्पणीं लिखत।

१३. विश्वनाथस्य देशकालकृतिविषये लघुप्रबन्धं लिखत।

१४. विश्वनाथस्य कृतिविषये लघुटिप्पणीं लिखत।

१५. विश्वनाथस्य विषये लघुटिप्पणीं रचयत।

१६. जगन्नाथस्य देशकालकृतिविषये लघुप्रबन्धं लिखत।

१७. जगन्नाथस्य कृतिविषये लघुटिप्पणीं रचयत।

## पाठसारः

यस्मिन् खलु अवगते काव्यस्य निर्माणे स्वरूपदोषगुणालङ्कारादीनाम् अवधारणे च शक्तिः उन्मिषति तद् अलङ्कारशास्त्रम्। यथा च व्याकरणं भाषायां व्युत्पत्त्यै अपेक्ष्यते तथा अलङ्कारशास्त्रम् अपि काव्ये नैपुण्याय अपेक्ष्यते। पाठे अस्मिन् आलङ्कारिकाणां देशकालकृतिविषयिणी चर्चा क्रियते। नवमशतकवर्त्ती काश्मीरवासी आनन्दवर्धनः ध्वन्यालोकग्रन्थं रचितवान्। आनन्दवर्धनः अनेन ग्रन्थेन ध्वनिप्रस्थानम् आरब्धवान्। आनन्दवर्धनमते तु काव्ये ध्वनिः एव प्रधानः भवति। सप्तदश शतकवर्त्ती तामिळनाडुप्रदेशीयः अप्पयदीक्षितः कुवलयानन्दग्रन्थं विलिख्य आलङ्कारिकेषु अग्रस्थानं लब्धवान्। एकादशशतकवर्त्ती काश्मीरीयः मम्मटाचार्यः काव्यप्रकाशं विरच्य अलङ्कारसाहित्ये महतीं ख्यातिम्

अर्जितवान्। प्रायः द्वादशशतकवर्त्ती मालवदेशीयः भोजराजः सरस्वतीकण्ठाभरणम् इति ग्रन्थं विरचितवान्। चतुर्दशशतकीयः उत्कलदेशीयः पण्डितप्रवरः विश्वनाथः साहित्यदर्पणं रचितवान्। स च ग्रन्थः सम्प्रति अतीव जनप्रियः विद्यते। वाराणसीस्थः सप्तदशशतकवर्त्ती पण्डितराजः जगन्नाथः रसगङ्गाधरं रचितवान्। प्रायः अयम् एव अलङ्कारग्रन्थः अन्तिमः वर्तते। जगन्नाथस्य ग्रन्थं न कोऽपि खण्डयितुं समर्थः भवति।

## पाठगतप्रश्नानाम् उत्तराणि

१. ८५५ – ८८३ ई.।
२. काश्मीरदेशः।
३. नोणभट्टः।
४. ध्वन्यालोकग्रन्थम्।
५. आनन्दवर्धनः।
६. १२९।
७. सप्तदश शतकम्।
८. तामिळनाडुप्रदेशः।
९. रङ्गराजाध्वरीन्द्रः।
१०. कुवलयानन्दः।
११. चन्द्रालोकम्।
१२. २७३।
१३. द्वौ परिच्छेदौ।
१४. चित्रमीमांसाखण्डनम्।
१५. प्रथमवेङ्कटः।
१६. राजानकः।
१७. एकादशशतकम्।
१८. काश्मीरदेशः।
१९. जैयटः।
२०. काव्यप्रकाशः।
२१. दश उल्लासाः।
२२. १४३ कारिकाः।
२३. वाराणस्याम्।
२४. मालवदेशः।
२५. एकादशशतकम्।
२६. भोजराजः।
२७. पञ्च परिच्छेदाः।
२८. षट्त्रिंशत् प्रकाशाः।
२९. शृङ्गाररसः।
३०. भोजराजः।
३१. उत्कलदेशीयः।
३२. चतुर्दश शतकम्।
३३. श्रीचन्द्रशेखरः।
३४. नारायणदासः।
३५. दश परिच्छेदाः।
३६. पुष्पमालाम्, भाषार्णवम्।
३७. काव्यप्रकाशस्य दीपिकां टीकाम्।
३८. सप्तदशशतकम्।
३९. वाराणसी।
४०. जगन्नाथः।
४१. द्वे आनने।
४२. पेरुभट्टः।
४३. लक्ष्मीदेवी।

छात्राणां बोधसौकर्याय आलङ्कारिकाणां देशकालकृतिविषये काचित् तालिका प्रदीयते।

| नाम | देशः | कालः | कृतिः |
|---|---|---|---|
| आनन्दवर्धनः | काश्मीरः | नवमशतकम् | ध्वन्यालोकः |
| अप्पयदीक्षितः | तामिळनाडुप्रदेशः | सप्तदशशतकम् | कुवलयानन्दः |
| मम्मटाचार्यः | काश्मीरः | एकादशशतकम् | काव्यप्रकाशः |
| भोजराजः | मालवप्रदेशः | द्वादशशतकम् | सरस्वतीकण्ठाभरणम् |
| विश्वनाथः | उत्कलप्रदेशः | चतुर्दशशतकम् | साहित्यदर्पणः |
| जगन्नाथः | वाराणसी | सप्तदशशतकम् | रसगङ्गाधरः |

॥ इति एकविंशः पाठः ॥

# २२

# वृत्तिपरिचयः

## प्रस्तावना

संस्कृतसाहित्ये वृत्ति इति शब्दः बहुषु शास्त्रेषु दृश्यते। परन्तु शास्त्रस्य भेदे सति वृत्तिशब्दस्यापि अर्थभेदः जायते। यथा- परार्थाभिधानं वृत्तिः इति व्याकरणशास्त्रे सुप्रसिद्धम्। साहित्यशास्त्रे तु अर्थबोधं प्रति अनुकूलः कश्चित् व्यापारः वृत्ति इति नाम्ना सुख्यातः वर्तते। तत्रापि वेदवेदान्तादिशास्त्रेषु यत् शास्त्रवाक्यं वर्तते, तेन शास्त्रवाक्येन तु साक्षात् शास्त्रार्थः प्रतिपाद्यते। साहित्यशास्त्रे तु प्रायः साक्षात् न कमपि अर्थं प्रतिपादयति। तत्र तु लक्षणावृत्तेः व्यञ्जनावृत्तेः च प्रयोगं करोति। यथा- भवतः क्व गृहम् इति प्रश्नः। उत्तरकर्ता तु ग्रामस्य शीतत्वपावनत्वादिधर्मस्य कथनाय गङ्गायां घोषः इति उत्तरति। अर्थात् साक्षात् उत्तरम् अदत्त्वा लक्षणावृत्त्या उत्तरति। एवञ्च सन्ध्यावन्दनं कुरु इति साक्षात् माता पुत्रं न कथयति। अपि तु गतोऽस्तमर्कः इति कथनेन व्यञ्जनावृत्त्या सन्ध्यावन्दनं कुरु इत्यर्थः गम्यते। काव्यादिषु लक्षणावृत्तेः व्यञ्जनावृत्तेश्च प्रयोगः भूयशः दरीदृश्यते। मूलार्थः गुप्ततया विद्यते। तस्मात् काचित् चमत्कृतिः दृश्यते। आदौ किञ्चित् वाक्यं श्रुतम्। ततःपरम् अभिधावृत्त्या शब्दस्य सङ्केतितार्थं स्मरति। ततः तात्पर्यवृत्त्या परस्परं पदार्थानाम् अन्वयेन शाब्दबोधः जायते। शब्दानां सङ्केतितार्थस्मरणात् परं कश्चित् बाधः भवति चेत् लक्षणावृत्तिः आश्रीयते। यथा- गङ्गायां घोषः इत्यस्य जलप्रवाहे ग्रामस्य अवस्थानासम्भवात् लक्षणावृत्त्या गङ्गाशब्दस्य गङ्गातीरम् इति अर्थः प्रतिपाद्यते। एवञ्च गतोऽस्तमर्कः इत्यत्र सूर्यः अस्तं गतः इत्यर्थे तात्पर्यं नास्ति। अत एव व्यञ्जनावृत्त्या सन्ध्यावन्दनं कुरु इत्यर्थः प्रतिपाद्यते। तात्पर्यवृत्त्या शब्दानाम् अन्वयमुखेन शाब्दबोधः प्रतिपाद्यते। प्रकृतपाठे अस्मिन् वृत्तिचतुष्टयं संक्षेपेण आलोच्यते।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- वृत्तीनां लक्षणादिकं ज्ञातुं समर्थो भवेत्।
- शाब्दबोधप्रक्रियां ज्ञातुं योग्यो भवेत्।
- लक्षणावृत्तिं ज्ञातुं समर्थो भवेत्।
- लक्षणावृत्तेः प्रयोगं कर्तुं शक्नुयात्।
- कुत्र लक्षणा प्रवर्तते इति विषये बोद्धुं शक्नुयात्।

- वाक्ये स्वयं लक्षणायाः प्रयोगं कर्तुं प्रभवेत्।
- लक्षणायाः प्रयोजनं ज्ञातुं शक्नुयात्।
- व्यञ्जनावृत्तिं ज्ञातुं समर्थो प्रभवेत्।
- व्यञ्जनावृत्त्या प्रतिपादितार्थं बोद्धुं पारयेत्।
- व्यञ्जनावृत्तेः व्यवहारं कर्तुं पारयेत्।
- का तात्पर्यवृत्तिः इति ज्ञातुं प्रभवेत्।
- तात्पर्यवृत्तेः स्वरूपं बोद्धुं शक्नुयात्।
- कुतः न अभिधया वाक्यार्थावबोधः इति ज्ञातुं शक्नुयात्।
- तात्पर्यवृत्तेः प्रयोजनं ज्ञातुं शक्नुयात्।

## २२.१) वृत्तिलक्षणम्

शब्दश्रवणजन्यार्थबोधं प्रति शब्द एव कारणम्। कारणे सति कार्यं सम्भवेत्। अतोऽत्रापि अर्थबोधं प्रति अनुकूलः कश्चिद् व्यापारो वर्तते। प्राचीनभारतीयाचार्याणां नये अयं व्यापार एव वृत्तिरित्युच्यते। अर्थात् शब्दो हि कारणं, तत्कारणं प्रति व्यापारो हि वृत्तिः। साहित्यशास्त्रे वृत्ति इति शब्दः पारिभाषिकः। अत्र शक्तिः एव वृत्तिः। यया शक्त्या अर्थः प्रतिपाद्यते, सा वृत्तिः।

## २२.२) वृत्तेः प्रकारभेदः

वृत्तिः प्रधानतः त्रिविधा अभिधा-लक्षणा-व्यञ्जनाभेदेन। केचित्तु तात्पर्यम् अपि वृत्तेः भेदत्वेन स्वीकुर्वन्ति। अतः वृत्तिः चतुर्धा अभिधा-लक्षणा-व्यञ्जना-तात्पर्यभेदेन। वृत्तेः प्रकारम् अवलम्ब्य पण्डितानां मतपार्थक्यं दरीदृश्यते।

केचन आचार्याः वदन्ति यदभिधावृत्त्या एव सर्वे एव अर्थाः प्रतिपादिताः भवन्ति। अतो लक्षणादिवृत्तीनां स्वीकारे नास्ति किमपि प्रयोजनम्। यथा मुकुलभट्टेन तस्य अभिधावृत्तिमातृकायाम् उक्तं यत् लक्षणा अभिधान्तर्गता एव।

महिमभट्टेन शब्दस्य एका एव अभिधावृत्तिः स्वीकृता। तन्मते यत्र अभिधाम् अन्तरेणैव अर्थबोधो भवति। तत्र अनुमितिसाहाय्येन एव भवति। अर्थात् लक्ष्यार्थस्तु अनुमितिगम्यः। स्वकीये व्यक्तिविवेकग्रन्थे लक्षणायाः पृथगस्तित्वं न स्वीकृतम्।

आचार्येण नागेशभट्टेन विरचिते परमलघुमञ्जूषानामकग्रन्थे पृथक्तया लक्षणावृत्तिस्तथा व्यञ्जनावृत्तिः स्वीकृता। तथापि अभिधावृत्तिस्तथा लक्षणावृत्तिः एकस्याः शक्तेरेव प्रकारभेदतया उल्लिखिता।

प्रसङ्गेऽस्मिन् नैयायिकानां मतमपि गुरुत्वपूर्णम्। ते अपि अभिधावृत्तिं लक्षणावृत्तिञ्च स्वीकुर्वन्ति। तन्नये व्यञ्जनावृत्तिस्वीकारेण नास्ति प्रयोजनम्। नैयायिकाः व्यञ्जनावृत्तिं खण्डयितुं विविधमूलग्रन्थान् तथा टीकाग्रन्थान् प्रणीतवन्तः। तन्मध्ये महिमभट्टविरचितः व्यक्तिविवेक इति तथा माधवतर्कसिद्धान्तविरचिता शक्तिवादस्य टीका अतीव गुरुत्वपूर्णा। आचार्यजयन्तभट्टेनापि तस्य

न्यायमञ्जरीग्रन्थे व्यञ्जनावृत्तिं खण्डयितुं प्रयत्नः विहितः। यतो हि वैशेषिकदर्शनं न्यायदर्शनस्याङ्गतया गण्यते। अतो बहवो वैशेषिकदार्शनिकाः अपि व्यञ्जनावृत्तेरस्वीकारे सममेव मतं पोषयन्ति। मीमांसका अपि व्यञ्जनावृत्तिं न स्वीकुर्वन्ति। तन्नये अभिधां लक्षणां च व्यतिरिच्य योऽर्थः प्राप्यते स तु अर्थापत्तिप्रमाणेनैव भवतीति। किन्तु परवर्तिकाले कोऽपि अर्थापत्तिं वृत्तिरूपेण न स्वीकृतवान्। वस्तुतः अर्थापत्तिप्रमाणं न्यायसम्मतम् अनुमानवदेव तुलनीयम्।

किन्तु अपरतः वैयाकरणैः सह अन्यालङ्कारिकाः अपि व्यञ्जनावृत्तेः प्रयोजनीयताम् उपलब्धवन्तः। प्रसङ्गेऽस्मिन् नागेशभट्टस्य मतं गुरुत्वपूर्णम्। तेन लघुमञ्जूषाग्रन्थे उक्तम्– सा वृत्तिस्त्रिधा शक्तिर्लक्षणा व्यञ्जना च इति। मुख्यार्थो बाधितो भवतु न भवतु वा, मुख्यार्थेन सह सम्बन्धः अस्तु मास्तु वा, मुख्यार्थः प्रसिद्धो भवतु अप्रसिद्धो वा भवतु, वाच्यादिव्यतिरिक्तो योऽर्थ उपलब्धो भवति, तस्योद्बोधकसंस्कारविशेष एव व्यञ्जना इति नागेशसिद्धान्तः। आचार्य आनन्दवर्धन एव प्रथमं व्यञ्जनावृत्तेरुपरि गुरुत्वमास्थाय ध्वनिप्रस्थानं प्रतिष्ठापयितुं ध्वन्यालोकनामकग्रन्थं प्रणीतवान्। टीकाकारोऽभिनवगुप्तोऽपि वृत्तिमिमां स्वीकृतवान्। अभिधालक्षणतात्पर्यैः सह व्यञ्जनापि स्वीक्रियते।

व्यञ्जनावृत्तिस्वीकारे मम्मटाचार्यस्य मतमपि उल्लेखयोग्यम्। अतः परं केचिद् आलङ्कारिकास्तथा आचार्या मन्यन्ते यत् अभिधा-लक्षणा-व्यञ्जनावृत्तिं व्यतिरिच्य तात्पर्यनामिका वृत्तिरपि वाक्यार्थप्रतिपादने सहायिका भवति। किन्तु केचन आलङ्कारिका वदन्ति यद् यद्यपि तात्पर्यवृत्तिः वाक्यार्थनिर्णये साहाय्यं करोति नैषा वृत्तिः। पुनः केषाञ्चिन्नये वक्तुरिच्छा एव तात्पर्यवृत्तिरिति तदुच्यते भाषापरिच्छेदे – "वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्"इति। अन्येषां केषाञ्चन मते पुनः ईश्वरेच्छा एव तात्पर्यवृत्तिः। प्रसङ्गेऽस्मिन् एतद् वक्तुं शक्यते यत् नवीननैयायिकानां ग्रन्थेषु तात्पर्यवृत्तेः पृथक्तया उल्लेखो नास्ति। वैयाकरणानां मतमपि नैयायिकानां मतमिव। वेदान्तिनोऽपि तात्पर्यं पृथक्तया न स्वीकुर्वन्ति।

किन्तु सन्ति केचन आलङ्कारिकास्तथा आचार्या ये तात्पर्यवृत्तिं गुरुत्वपूर्णवृत्तिरूपेण स्वीकुर्वन्ति। आचार्यधनिकेन तस्य काव्यनिर्णयग्रन्थे उक्तम्– 'यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्' इति। अर्थात् तन्मते अभिधावृत्तिं लक्षणावृत्तिञ्च व्यतिरिच्य ये तावद् रसादयोऽर्थाः वर्तन्ते, तात्पर्यवृत्तिसाहाय्येन तेषां ज्ञानं भवति। प्रयोजनानुसारं तात्पर्यवृत्तिः सर्वविधमर्थं प्रकाशयितुं समर्था भवति। धनिक इव मम्मटविश्वनाथाद्यालङ्कारिका अपि वृत्तिचतुष्टयं स्वीकुर्वन्ति अर्थात् तेऽपि तात्पर्यवृत्तिं स्वीकुर्वन्ति। मम्मटः तात्पर्यवृत्तेरस्तित्वं समर्थयन् काव्यप्रकाशे उक्तम् –" अभिधा-तात्पर्य-लक्षणात्मक-व्यापारत्रयातिवर्ती ध्वननादिव्यापारोऽनपह्नवनीय एव" इति। परवर्ती आचार्यो विश्वनाथोऽपि तात्पर्यस्वीकारविषये मम्मटपन्थी। सिद्धान्तमुक्तावलीकृता विश्वनाथन्यायपञ्चाननेन उक्तम् आसत्त्यादिवत् तात्पर्योऽपि शाब्दबोधं प्रति कारणमात्रमिति। काव्यजगति अभिधा, लक्षणा, व्यञ्जना, तात्पर्यमिति वृत्तिचतुष्टयम् अभिलसति।

## २२.३) अभिधा

अभिपूर्वकाद् धा-धातोः अङ्-प्रत्ययेन अभिधाशब्दोऽयं निष्पन्नः। प्रत्येकं शब्दानां सर्वजनप्रसिद्धः कश्चिद् मुख्याऽर्थो वर्तते। सूर्यचन्द्रादीनामुच्चारणेन तेषां स्वकीयार्थप्रतीतिर्भवति। शब्दो

येन व्यापारेण वृत्त्या वा लोकप्रसिद्धम् अर्थं बोधयति स व्यापारो वृत्तिर्वा अभिधा इत्युच्यते। आचार्यमम्मटेन तस्य काव्यप्रकाशग्रन्थे अभिधालक्षणं निरूपितं– "स मुख्याऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते" इति। शब्दस्य येन व्यापारेण शक्त्या वा शब्दस्य सङ्केतितार्थबोधो जायते साभिधा इत्युच्यते। इयम् अभिधा शक्तिरिति सङ्केत इति वा उच्यते। शक्तिविषयकालोचनायां सिद्धान्तमुक्तावलीकृता विश्वानाथेन उक्तम् - 'यत् पदेन सह पदार्थस्य सम्बन्ध एव शक्तिः' इति। अस्मात् शब्दाद् अयमर्थो बोध्यव्य इति या ईश्वरेच्छा सैव शक्तिरित्युच्यते – शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। "सा चास्माच्छब्दादयमर्थो बोधव्य इतीश्वरेच्छारूपा" इति सिद्धान्तमुक्तावली। अयं सङ्केतः शब्दस्य शक्तिग्राहकः। अर्थाद् एकस्माद् निर्दिष्टशब्दात् एको निर्दिष्टोऽर्थ एव बोद्धव्यः। यथा घटशब्दात् कम्बुग्रीवादिमान् पिण्डः इति अयमर्थ एव बोद्धव्यः, नान्यः कश्चिदर्थः। यथा घटमानय इति एकं वाक्यं श्रुतम्। ततः परम् अभिधावृत्त्या घटशब्दस्य कम्बुग्रीवादिमान् पिण्डः बोध्यते। प्रकृते घटशब्दस्य सङ्केतितार्थः कम्बुग्रीवादिमान् पिण्डः। यतो हि अस्मात् घटशब्दात् कम्बुग्रीवादिमान् पिण्डः इति अयम् अर्थः बोद्धव्यः इति ईश्वरेच्छा वर्तते। एवमेव आनय इत्यस्य अपि अभिधावृत्त्या आनयनरूपक्रियां बोधयति। घटशब्दात् अभिधावृत्त्या कम्बुग्रीवादिमान् पिण्डः इति आयाति। स च वाच्यार्थः भवति। दर्पणकारः विश्वनाथः स्वकीये साहित्यदर्पणनामके ग्रन्थे अभिधायाः लक्षणं प्रोक्तम् - "तत्र सङ्केतितार्थस्य बोधनात् अग्रिमाभिधा" इति। अर्थात् साक्षात् सङ्केतिते अर्थे शब्दस्य यः मुख्यः वृत्त्यन्तरानुजीवकः व्यापारः वृत्तिः साभिधा। शब्दस्य सङ्केतितार्थः यया वृत्त्या बोध्यते, सा अभिधावृत्तिः। इयञ्च मुख्या वृत्तिः वर्तते। अर्थबोधनाय इयं वृत्तिः सर्वदा आदौ प्रवर्तते। लक्षणाव्यञ्जनावृत्त्योः प्रवृत्तेः पूर्वम् अभिधावृत्तिः प्रवर्तते। तस्मात् लक्षणाव्यञ्जनावृत्ती अभिधावृत्त्याश्रिते। अभिधावृत्तिस्तु अन्याम् वृत्तिं न आश्रयति। शक्त्यपरपर्यायसङ्केतितार्थबोधजनको व्यापारः अभिधा। सङ्केतश्च शक्तिग्राहकः समयः। स चास्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकः इत्युक्तं सङ्गच्छते। घटमानय इत्यत्र अभिधावृत्त्या घटशब्दस्य कम्बुग्रीवादिमान् पिण्डः इति सङ्केतितार्थः बोध्यते। घटम् इति शब्देन सह कम्बुग्रीवादिमतः पदार्थस्य सम्बन्धः अस्तीति ज्ञानम् अभिधावृत्त्या सम्भवति। यतो हि अस्मात् घटशब्दात् कम्बुग्रीवादिमतः पदार्थस्य ज्ञानं भवतु इति ईश्वरेच्छा वर्तते। स च सङ्केतितार्थः अभिधावृत्त्या एव बोध्यते। येन शब्देन सङ्केतितार्थः प्रतिपाद्यते, स वाचकः इत्युच्यते। यथा घटशब्दः वाचकः भवति। अभिधावृत्त्या यः अर्थः प्रतिपाद्यते, स वाच्यः। यथा - कम्बुग्रीवादिमान् पदार्थः इति वाच्यार्थः।

## २२.४) अभिधाप्रक्रिया/सङ्केतग्रहोपायः

कश्चित् समुत्पन्नसङ्केतज्ञानविशिष्टः जनः द्वितीयं कञ्चन समुत्पन्नसङ्केतज्ञानविशिष्टं जनं लक्षीकृत्य गामानय इति वाक्यं प्रयुङ्क्ते। ततः द्वितीयः जनः गोः आनयनरूपं कर्म करोति। तृतीयः कश्चित् सङ्केतज्ञानहीनः बालः एतत् सर्वं पश्यति। ततः अश्वमानय इति वाक्यं प्रयुङ्क्ते। तदा अश्वस्य आनयनरूपं कर्म करोति। एतदपि तृतीयः जनः पश्यति। द्वितीयवाक्ये अश्वपदसन्निधानात् गोभिन्नस्य वस्तुनः आनयनं सम्भवति। एतेन ज्ञायते यत् गोशब्दस्य सङ्केतः सास्नालङ्गूलमति प्राणिनि वर्तते, अश्वशब्दस्य च घोटके सङ्केतः वर्तते इति जानाति। ततः परं गां बधान इति वाक्यस्य श्रवणात् परं गोः बन्धनरूपकार्यं करोति। बधान इति भिन्नक्रियापदसन्निवेशात् भिन्नं कार्यं जायते। एतेन आनयनपदस्य

आनयनक्रियायां बधानपदस्य बन्धनक्रियायां सङ्केतः विद्यते इति ज्ञानं जायते। पदानां त्यागसंयोगाभ्यां सङ्केतरहितस्य जनस्य सङ्केतज्ञानं जायते।

क्वचिच्च प्रसिद्धार्थपदसाहचर्यात् बालः सन्दिग्धसङ्केतस्य शब्दस्य सङ्केतम् अवधारयति। यथा 'इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्र मधु करोतीति व्युत्पत्त्या मधुकरशब्दस्य भ्रमरे सङ्केतः मधुमक्षिकायां वेति। तदा भ्रमरः पङ्कजे पूर्वं मधुपानं करोति इति दृश्यं तु अस्माभिः दृष्टम्। एतेन कमलपदसमभिहारात् मधुकरशब्दस्य भ्रमर एव सङ्केतः।

क्वचिच्च केवलशब्दप्रमाणेन सङ्केतज्ञानं भवति। तदुक्तं साहित्यदर्पणकारेण 'आप्तोपदेशात्' इति। यथा 'अयम् अश्वशब्दवाच्यः' इति आप्तेनोक्ते तत्र प्रामाणिकत्वनिश्चयात् बालः अश्वशब्दस्य घोटके सङ्केतमवधारयति। एतत् त्रयं प्रदर्शनमात्रम्। व्याकरणादयः अप्यन्ये सङ्केतग्रहोपायाः ग्राह्याः। तदुक्तम् -

**"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च।**
**वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।। " इति।**

## पाठगतप्रश्नाः-१

१. व्याकरणशास्त्रे प्रसिद्धस्य वृत्तिशब्दस्य लक्षणं किम्।
२. वृत्तिशब्दस्य अपरं नाम किम्।
३. वृत्तिः कतिविधा।
४. वृत्तयः काः।
५. वृत्तेः लक्षणं किम्।
६. अभिधाशब्दस्य व्युत्पत्तिं लिखत।
७. अभिधावृत्तेः लक्षणं लिखत।
८. दर्पणकारमते अभिधावृत्तेः लक्षणं लिखत।
९. सङ्केतः कः।
१०. अभिधावृत्त्याः किं प्रतिपाद्यते।

## २२.५) लक्षणावृत्तिः

आलङ्कारिकैः तिस्रः वृत्तयः स्वीकृताः। तासु लक्षणावृत्तिः अन्यतमा। मुख्यार्थस्य अर्थात् वाच्यार्थस्य बाधे तात्पर्यानुपपत्तौ वा इयं वृत्तिः प्रवर्तते। सा च लक्षणा रूढेः प्रयोजनाच्च द्विविधा। प्रस्तुतेऽस्मिन् पाठे दर्पणकारः पण्डितविश्वनाथकविराजः स्वकृतग्रन्थौ लक्षणावृत्तिं यथा प्रतिपादितवान् तथा वयं ज्ञास्यामः।



## २२.६) लक्षणायाः लक्षणम्

कस्मिन्नपि वाक्ये उच्चारिते आदौ अभिधावृत्तिः प्रवर्तते। तत्र अभिधया यदि वाक्यार्थः न ज्ञायते तर्हि मुख्यार्थसम्बन्धिनं कमपि आश्रित्य यया वृत्त्या अर्थावबोधः जायते सा वृत्तिः लक्षणा इति विदग्धानाम् अभिप्रायः। लक्षणं लक्षणेति वा प्रतीतिविषयीक्रियते स्वाभिमतार्थसम्पत्तिः यया इति निर्वचनेन लक्षणाशब्दः निष्पद्यते। तस्मादुक्तं पण्डितविश्वनाथकविराजेन स्वकृतसाहित्यदर्पणे -

**मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।**
**रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता।। इति।**

अत्र लक्षणे उक्तस्य बाधशब्दस्य तात्पर्यानुपपत्तिः इत्यर्थः। मुख्यार्थस्य अर्थात् अभिधेयार्थस्य तात्पर्यानुपपत्तौ रूढेः अर्थात् प्रसिद्धिवशात् प्रयोजनाद् अर्थात् उद्देश्यविशेषाद् च यया वृत्त्या मुख्यार्थेन सह सम्बद्धः अन्योऽर्थः प्रतीयते बुद्ध्यते, सा शब्दोपरि अर्पिता आरोपिता वृत्तिः लक्षणा इत्यभिधीयते। "यया अन्योऽर्थः प्रतीयतेऽसौ लक्षणा" इति लक्षणायाः लक्षणम्।

### २२.६.१) प्रयोजनवती लक्षणा

उदाहरणं यथा - गङ्गायां घोषः इति। तथाहि गङ्गायां घोषः इति वाक्ये आदौ अभिधावृत्तिः प्रवर्तते। गङ्गाशब्दस्य अभिधया जलप्रवाहः इत्यर्थः प्राप्यते। तेन वाक्यस्यास्य अर्थो भवति यत् गङ्गाजलप्रवाहे घोषः प्रतिवसति इति। तत्र जले तु केवलं मीनभुजङ्गादयः प्रतिवसन्ति न मनुष्याः इति अभिधालब्धार्थस्य बाधः भवति। तन्नाम एतेन वाक्येन अर्थबोधः न जायते। तस्मादत्र अनया वृत्त्या मुख्यार्थसम्बन्धिनः ग्रहणं भवति। तत्र गङ्गायां घोषः इत्यत्र गङ्गया सह सामीप्यसम्बन्धेन युक्तत्वात् गङ्गातीरः लक्षणावृत्त्या स्वीक्रियते। तेन एनया लक्षणया मुख्यार्थस्य बाधे सति गङ्गातीरे घोषः प्रतिवसति इति मुख्यार्थाद् भिन्नः अर्थः प्रतीयते। ननु किं फलमस्याः लक्षणायाः प्रवर्तमाने इति चेदुच्यते यत् रूढेः प्रयोजनाद् वा इति। अत्र प्रकृते गङ्गायां घोषः इत्यत्र गङ्गातीरे घोषः प्रतिवसति इत्यर्थप्रतीतौ गङ्गायाः धर्माः घोषे अर्थाद् आभीरपल्लौ आरोप्यन्ते। तेन गङ्गायाः शीतत्वपावनत्वातिशयरूपाः धर्माः आभीरपल्लौ अस्तीति प्रतीयते। तेनात्र घोषाणां निवासप्रदेशः शीतत्वपावनत्वादिधर्मवान् इति प्रयोजनं फलति। अत्र इदं प्रयोजनं प्रतिपादयितुमेव इयं लक्षणा आश्रियते। अत्र प्रयोजनवती लक्षणा।

अस्याः अन्यदुदाहरणं तावत् - सिंहो माणवकः इति। अत्र माणवकः चतुष्पात्त्वविशिष्टः सिंहो न भवतीति सिंहशब्दस्य मुख्यार्थस्य बाधः। शौर्यतीक्ष्णत्वादिधर्मैः सादृश्यं सम्बन्धमाश्रित्य लक्षणावृत्तिः सिंहसदृशो माणवकः इत्यर्थं बोधयति। अत्र तीक्ष्णत्वादिधर्मः प्रयोजनम्।

### २२.६.२) रूढिमूला लक्षणा

कलिङ्गः साहसिकः इत्यत्र या लक्षणा प्रवर्तते सा रूढिवशादेव। अत्र कलिङ्गशब्दे अभिधावृत्त्या तदभिधः देशः गम्यते। तेन अभिधया कलिङ्गनामको देशः साहसिकः इति अर्थः प्रतीयते। स च अनर्थकः एव। यतो हि साहसिकत्ववीरत्वादिधर्माः अचेतने देशगते वस्तुनि नैव तिष्ठन्ति। न हि अचेतने वस्तुनि चेतनधर्माः स्थातुं प्रभवेयुः, चैतन्यधर्माणां चेतने एव उपलक्षणत्वात्। तस्माद् न देशः तथाविधः

साहसिकत्वधर्मवान् स्यात् अचेतनत्वात्। तेनात्र मुख्यार्थस्य बाधः भवति। मुख्यार्थस्य बाधे कलिङ्गपदे लक्षणा प्रवर्तते। तेन तया लक्षणया तद्देशसंयुक्ताः कलिङ्गजनाः लक्ष्यन्ते। यतो हि देशग्रहणेन संयोगसम्बन्धेन तत्स्थानामपि ग्रहणं जायते। ततः कलिङ्गदेशवासी साहसिकः इति लक्ष्यार्थः प्रतीयते। देशग्रहणेन रूढेः एव तत्र वर्तमानानां बोधो जायते। तेन अत्र प्रसिद्धवशादेव लक्षणा प्रवर्तते, न तु कस्मैचित् प्रयोजनाय। तस्मादत्र रूढिमूला लक्षणा।

दर्पणकारः स्वकृतग्रन्थौ एकां शङ्काम् उत्थापयति। तद्धि - ननु काव्यप्रकाशकारः कर्मणि कुशलः इत्यत्र रूढिः वर्तते। तथाहि कुशलः शब्दस्य अभिधया कुशाल्लाति इत्यर्थः आयाति। तादृशस्यार्थस्य मुख्यार्थस्य प्रकृते बाधत्वात् दक्षरूपार्थः लक्षणया बोध्यते। तेनात्र रूढिवशादेव अयमर्थः आगतः इत्यतः अत्र रूढिमूला लक्षणा इति चेन्न, कुशग्रहणरूपार्थे व्युत्पत्या प्राप्तेऽपि दक्षरूपस्यैव मुख्यार्थत्वम्। यमर्थं सर्वे स्वीकुर्वन्ति शब्दस्योच्चारिते एव स एवार्थः वाच्यार्थो भवितुम् अर्हति। ततः अत्र कर्मणि कुशलः इति वाक्ये न लक्षणा प्रवर्तिता, मुख्यार्थस्य बाधाभावात् इति साहित्यदर्पणकाराभिमतम्।

## २२.६.३) काव्यप्रकाशकारमतम्

काव्यप्रकाशकारः मम्मटाचार्यः स्वकीयग्रन्थे लक्षणायाः स्वरूपं प्रकाशितवान्। तल्लक्षणं तावत् -

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।। इति।**

रूढितः प्रयोजनात् वा मुख्यार्थस्य बाधे तद्योगे यया लक्षणया अन्यः अर्थः लक्ष्यते सा एव शब्दोपरि आरोपिता क्रिया एव लक्षणा इति लक्षणसमन्वयः।

## पाठगतप्रश्नाः-२

११. दर्पणकारोक्तं लक्षणालक्षणश्लोकं लिखत।

१२. काव्यप्रकाशकारमते लक्षणालक्षणश्लोकं लिखत।

१३. लक्षणा कतिविधा।

१४. काव्यप्रकाशकारः कः।

१५. साहित्यदर्पणं कः विरचितवान्।

१६. लक्षणा कस्य उपरि आरोपिता वृत्तिः।

१७. कस्य बाधे लक्षणा प्रवर्तते।

१८. लक्षणया लब्धार्थः किमुच्यते।

## २२.७) दर्पणकारमते लक्षणाभेदाः

साहित्यदर्पणकारः पण्डितविश्वनाथकविराजः स्वकृतग्रन्थौ लक्षणायाः षोडशमुख्यभेदान् प्रदर्शितवान्। अत्र वयं तस्मिन् विषये ज्ञास्यामः। इयं लक्षणा द्विधा विभज्यते - उपादानलक्षणा लक्षणलक्षणा चेति।

### २२.७.१) उपादानलक्षणा

इयं प्रतिपाद्यमाना लक्षणा मुख्यार्थस्य लक्ष्यार्थस्य चोभयस्य उपादानाद् उपादानलक्षणा। तेन रूढौ उपादानलक्षणा, प्रयोजने उपादानलक्षणा चेति भेदद्वयं प्राप्तम्। तस्मादुक्तं दर्पणे -

**मुख्यार्थस्येतराक्षेपे वाक्यार्थेऽन्वयसिद्धये।**
**स्यादात्मनोऽप्युपादानादेषोऽपादानलक्षणा।। इति।**

वाक्ये पदार्थप्रतिपादनावसरे अन्वयसिद्ध्यर्थं यया शक्त्या इतरस्य मुख्यार्थभिन्नस्य वा आक्षेपः उपस्थापनं वा विधीयते, यया च आत्मनः अर्थात् मुख्यार्थस्य इतरस्य तद्भिन्नस्य च बोधः भवति, सा उपादानलक्षणा इत्युच्यते। तत्र रूढौ उपादानलक्षणायाः उदाहरणं तावत् - श्वेतः धावति इति। अत्र श्वेतस्य अचेतनत्वात् तस्मिन् धावनरूपव्यापारः न सम्भवति। तस्मात् मुख्यार्थस्य बाधे लक्षणया अश्वादयः अर्थाः लक्ष्यन्ते। तेन अत्र यथा श्वेतरूपस्य मुख्यार्थस्य ग्रहणं तथा तदितरस्य अश्वार्थस्यापि उपादानं भवति। तस्मादत्र उपादानलक्षणा। प्रयोजने उदाहरणं तावत् - कुन्ताः प्रविशन्ति। कुन्तशब्दस्य वस्तु इति अभिधया लब्धः अर्थः। देशस्य प्रवेशनरूपचेतनधर्मवत्त्वं न सम्भवति। तस्मादत्र तादृशस्यार्थस्य बाधे पुरुषरूपो लक्ष्यार्थः लभ्यते। अत्रापि उभयोः ग्रहणात् उपादानलक्षणा। अत्र कुन्तादीनाम् अतिगहनत्वं प्रयोजनम्।

इयञ्च उपादानलक्षणा आरोपाध्यवसानाभ्यां द्वेधा भिद्यते। सारोपा उपादानलक्षणा साध्यवसाना उपादानलक्षणा चेति। तत्र किं नाम सारोपत्वं साध्यवसानत्वं वा इति चेदुच्यते -

**विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत्।**
**सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका।। इति।**

यत्र विषयविषयिणोः मध्ये विषयिणः उच्चारणं नाम पदेन उपस्थापनं भवति सा सारोपा इत्युच्यते। तस्मादुक्तं दर्पणे -

"विषयिणा अनिगीर्णस्य विषयस्य तेनैव सह तादात्म्यप्रतीतिकृत्सारोपा। इयमेव रूपकालङ्कारस्य बीजम्" इति। तत्र रूढौ उपादानलक्षणा सारोपा यथा - अश्वः श्वेतः धावति इति। अत्र मुख्यार्थस्य श्वेतस्य इतरस्य अश्वस्य च ग्रहणं भवति। अत्र विषयिणः अश्वस्य उच्चारणाद् उल्लेखाद्वा सारोपा उपादानलक्षणा। प्रयोजने उपादानलक्षणा सारोपा यथा - एते कुन्ताः प्रविशन्ति इति। अत्र सर्वनाम्ना विषयिणः ग्रहणं भवति। अत्र द्वयोः उच्चारणाद् विषयिणः उल्लेखाच्च सारोपा उपादानलक्षणा। अत्र प्रयोजनं तावत् कुन्तादीनाम् अतिगहनत्वम्।

यत्र विषयिणः उच्चारणम् उल्लेखो वा न भवति सा साध्यवसाना इत्युच्यते। तस्मादुक्तं साहित्यदर्पणे -

**"निगीर्णस्य पुनर्विषयस्यान्यतादात्म्यप्रतीतिकृत्साध्यवसाना" इति।**

सा च साध्यवसाना उपादानलक्षणा रूढिप्रयोजनवशाद् द्विविधा। तत्र रूढौ उपादानलक्षणा साध्यवसाना यथा - श्वेतो धावति इति। अत्र अश्वरूपविषयिणः अनुच्चारणात् साध्यवसाना उपादानलक्षणा। प्रयोजने उपादानलक्षणा साध्यवसाना यथा - कुन्ताः प्रविशन्ति इति। अत्रापि पूर्ववद् विषयिणः सर्वनाम्नः ग्रहणाभावात् साध्यवसाना।

सा च उपादानलक्षणा सारोपा शुद्धागौणीभेदात् द्विविधा। तस्मादुक्तं साहित्यदर्पणे –

**सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि।**
**सादृश्यात्तु मता गौण्यस्तेन षोडशभेदिताः।। इति।**

तत्र रूढौ उपादानलक्षणा सारोपा शुद्धा यथा – अश्वः श्वेतो धावतीति। तत्रैव उपादानलक्षणा सारोपा गौणी यथा – एतानि तैलानि हेमन्ते सुखानीति। अत्र तैलशब्दस्य तिलस्थस्नेहरूपः अर्थः मुख्यार्थः। तं सहायीकृत्य उपादाय वा लक्ष्यार्थरूपं सर्षपादिरूपम् अर्थं बोधयति तैलशब्दः। तस्मादत्र उपादानलक्षणा। तत्र रूढौ उपादानलक्षणा साध्यवसाना शुद्धा यथा – श्वेतो धावतीति। तत्रैव उपादानलक्षणा साध्यवसाना गौणी यथा – तैलानि हेमन्ते सुखानि इति। प्रयोजने तु उपादानलक्षणा सारोपा शुद्धा यथा – एते कुन्ता प्रविशन्ति इति। तत्रैव गौणी यथा – एते राजकुमाराः गच्छन्ति इति। तत्रैव प्रयोजने उपादानलक्षणा साध्यवसाना शुद्धा यथा – कुन्ताः प्रविशन्ति इति। गौण्यां तु – राजकुमाराः गच्छन्तीति। एवंप्रकारेण उपादानलक्षणा अष्टविधा इति विदग्धाभिप्रायः।

## २२.८) लक्षणलक्षणा

यस्यां लक्षणायां मुख्यार्थेतरस्यैव उपलक्षणम्, न वा केवलं मुख्यार्थस्य तदुभयस्य वा। इयमेव जहत्स्वार्था इत्युच्यते। अस्याः लक्षणं तावत् साहित्यदर्पणे-

**अर्पणं स्वस्य वाक्यार्थे परस्यान्वसिद्धये।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा।। इति।**

यत्र परस्य मुख्यार्थभिन्नार्थस्य लक्ष्यार्थस्य वा अन्वयसिद्धये अर्थोपपत्तौ वा यया शक्त्या स्वस्य नाम मुख्यार्थस्य अर्पणं त्यागो वा उपलक्ष्यते सा लक्षणलक्षणावृत्तिः इत्युच्यते। सा च रूढिप्रमाणाभ्यां द्वेधा विभज्यते। तत्र रूढौ लक्षणलक्षणा यथा – कलिङ्गः साहसिक इति। अत्र कलिङ्गशब्देन न तु तद्देशस्य अपि तु तद्देशस्थस्य मुख्यार्थभिन्नस्य परस्य वा लक्षणया ग्रहणं भवति। तत्र प्रयोजने लक्षणलक्षणा यथा - गङ्गायां घोषः इति। अत्र न गङ्गाप्रवाहरूपस्य मुख्यार्थस्य परन्तु तीररूपमर्थम् एव बुद्ध्यते। तस्मादत्र लक्षणलक्षणा। लक्षणलक्षणायाः उदाहरणं तावत् -

**उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।**
**विदधदीदृशमेव सदा सखे, सुखितमास्स्व ततः शरदां शतम्।। इति।**

अत्र श्लोकेऽस्मिन् उपकृतम् इति मुख्यार्थस्य त्यागेन वैपरीत्यलक्षणया अपकृतमिति लक्ष्यार्थः बुद्ध्यते। अत्र लक्षणलक्षणा स्पष्टा प्रकाशिता।

सा च लक्षणलक्षणा आरोपाध्यवसानाभ्यां द्विविधा। तत्र लक्षणं तावत् -

आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा।। इति।

श्लोकस्यास्य उपरि व्याख्यासत्त्वात् पुनरुक्तिभयात् न पुनः उल्लिख्यते। तत्र रूढौ लक्षणलक्षणा सारोपा यथा - कलिङ्गः पुरुषो युध्यते इति। अत्र कलिङ्गपुरुषयोः आधाराधेयभावः सम्बन्धः। अत्र विषयिणः पुरुषशब्दस्य उल्लेखाद् इयं सारोपा। तत्रैव लक्षणलक्षणा साध्यवसाना यथा - कलिङ्गः साहसिकः इति। प्रयोजने लक्षणलक्षणा सारोपा यथा - आयुर्घृतम् इति। अत्र कार्यकारणसम्बन्धः वर्तते। प्रस्तुते घृतम् आयुतादात्म्येन गृह्यते। अत्र अव्यभिचारेण आयुष्करत्वं प्रयोजनम्। तत्रैव लक्षणलक्षणा साध्यवसाना यथा - आयुः पिबति इति।

सा च लक्षणलक्षणा सारोपा साध्यवसाना च प्रत्येकं शुद्धागौणीभेदमापाद्य द्वेधा विभज्यते। तत्र लक्षणं तावत् -

**सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि।**
**सादृश्यात्तु मता गौण्यस्तेन षोडशभेदिताः।। इति।**

तत्र रूढौ लक्षणलक्षणा सारोपा शुद्धा यथा - कलिङ्गः पुरुषो युध्यते इति। रूढौ सारोपायामेव गौण्याम् उदाहरणं यथा - राजा गौडेन्द्रं कण्टकं शोधयति इति। राजा गौडनाम्ना प्रसिद्धस्य देशस्य इन्द्रं राजानं वा उद्धारयति इत्यर्थः। अत्र विषयिणः गौडेन्द्रपदस्य उल्लेखाद् इयं सारोपा। तत्र रूढौ लक्षणलक्षणा साध्यवसाना शुद्धा यथा - कलिङ्गः साहसिकः इति। गौण्यां तु - राजा कण्टकं शोधयति इति। प्रयोजने लक्षणलक्षणा सारोपा शुद्धा यथा - आयुर्घृतम् इति। गौणी च – गौर्वाहीकः इति। अत्र वाहीकशब्दस्य मुख्यार्थः यद्यपि पञ्जाबदेशः। तथापि अत्र तादृशार्थे मुख्यार्थबाधात् तत्रस्थः पुरुषः पदेनानेन ज्ञाप्यते। तत्र प्रयोजने लक्षणलक्षणा साध्यवसाना शुद्धा यथा - आयुः पिबति इति। गौण्यां तु उदाहरणम् - गौर्जल्पति इति। एवमेव लक्षणलक्षणा अष्टसु भेदेषु विभक्ता।

उपादानलक्षणा अष्टधा लक्षणलक्षणा च अष्टधा विभज्यते। एवम्प्रकारेण लक्षणा षोडिशभेदिता इति पण्डितविश्वनाथकविराजः स्वकृतसाहित्यदर्पणे लक्षणायाः भेदं विस्तरेण प्रतिपादितवान् इति शिवम्।

## पाठगतप्रश्नाः-३

१९. लक्षणा कतिविधा।

२०. उपादानलक्षणा कतिप्रकारिका।

२१. रूढौ उपादानलक्षणायाः साध्यवसानायाः शुद्धायाः उदाहरणं किम्।

२२. प्रयोजने लक्षणलक्षणायाः सारोपायाः गौण्याः उदाहरणं किम्।

२३. रूढौ उपादानलक्षणायाः सारोपायाः गौण्याः उदाहरणं किम्।

२४. प्रयोजने उपादानलक्षणायाः साध्यवसानायाः शुद्धायाः उदाहरणं किम्।

२५. रूढौ लक्षणलक्षणायाः साध्यवसानायाः गौण्याः उदाहरणं किम्।

२६. प्रयोजने उपादानलक्षणायाः साध्यवसानायाः गौण्याः उदाहरणं किम्।

२७. रूढौ लक्षणलक्षणायाः साध्यवसानायाः शुद्धायाः उदाहरणं किम्।

२८. प्रयोजने लक्षणलक्षणायाः साध्यवसानायाः शुद्धायाः उदाहरणं किम्।

## २२.९) व्यञ्जना

आलङ्कारिकसम्प्रदाये प्रसिद्धासु वृत्तिषु व्यञ्जना इति प्रसिद्धा वृत्तिः शब्दव्यापारो वा। वि-इत्युपसर्गपूर्वकात् अञ्ज्धातोः णिच्प्रत्यये युच्प्रत्यये वा स्त्रियां टापि व्यञ्जना इति शब्दः निष्पद्यते। अञ्ज्धातुः प्रकाशनार्थकः। वि-इत्युपसर्गः विशेषरूपस्य अर्थस्य द्योतकः। तस्मात् येन व्यापारेण विशेषरूपस्य अर्थस्य प्रकाशः भवति सः व्यापारः व्यञ्जना इत्युच्यते। अयं विशेषरूपः अर्थः रमणीयः सहृदयश्लाघ्यः प्रतीयमानश्च भवति। अयमेव व्यङ्ग्यार्थः इत्युच्यते। यथा मुख्यार्थस्य बोधिका अभिधा, लक्ष्यार्थस्य च लक्षणा तथैव व्यङ्ग्यार्थस्य बोधिका भवति व्यञ्जना। अतः उच्यते साहित्यदर्पणे –

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः॥ इति। (२/३)**

यथा अङ्गनासु अवयवाद्यतिरिक्तत्वेन किञ्चिद् अन्यदेव लावण्यं सहृदयनयनामृतसमं तिष्ठति तथैव वाणीषु वाच्यार्थाद् कश्चिद् भिन्नः एव व्यङ्ग्यार्थो भवति। तथाहि उच्यते ध्वन्यालोके प्रथमोद्योते आनन्दवर्धनाचार्येण -

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं बिभाति लावण्यमिवाङ्गनासु॥ इति। (१/४)**

अयमेव व्यङ्ग्यार्थः व्यञ्जनया वृत्त्या बुध्यते। ननु का नाम व्यञ्जना इति चेदुच्यते साहित्यदर्पणकारेण विश्वनाथकविराजेन –

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥ इति। (२/१२)**

अर्थः – अभिधा, लक्षणा तात्पर्यं चेति याः तिस्रः वृत्तयः वर्तन्ते ताः यदा स्वं स्वम् अर्थं बोधयित्वा क्षीणशक्तयः भवन्ति तदा यया वृत्त्या वाच्यलक्ष्यार्थापेक्षया कश्चिद् भिन्नः अर्थः बोध्यते सा वृत्तिः व्यञ्जना इत्युच्यते। इयं व्यञ्जना शब्दनिष्ठा, अर्थनिष्ठा, प्रकृतिनिष्ठा, प्रत्ययनिष्ठा निपातादिनिष्ठा च भवति।

यथा गतोऽस्तम् अर्कः इति एकं वाक्यम्। अत्र अभिधावृत्त्या सूर्यः अस्ताचलं प्राप्तः इति अर्थः आगच्छति। परन्तु प्रकरणभेदात् व्यञ्जनया बहवः व्यङ्ग्यार्थाः बोध्यन्ते। तथाहि क्रीडन्तं बालकं प्रति पित्रा उक्ते सति बालकः गच्छ गच्छ इति व्यङ्ग्यार्थं गृहीत्वा गृहं गच्छति। एवमेव अभिसारिकां प्रति इदम् उक्तं चेत् अभिसरणं कुरु इति व्यङ्ग्यार्थः, ब्रह्मचारिणं प्रत्युक्तं चेत् सन्ध्यावन्दनं कुरु इति व्यङ्ग्यार्थः,

चौरं प्रति उक्तं चेत् चौर्यं कुरु इति व्यङ्ग्यार्थः, आपणिकं प्रति उक्तं चेत् पण्यानि अपसार्यन्ताम् इति व्यङ्ग्यार्थः, गोपालकं प्रति उक्तं चेत् गावो निरुध्यन्ताम् इति प्रकरणभेदात् विविधाः व्यङ्ग्यार्थाः एकस्मात् एव वाक्यात् बुध्यन्ते।

प्रसिद्धः साहित्यिकः जयदेवः चन्द्रालोकस्य सप्तमे मयूखे व्यञ्जनायाः स्वरूपम् इत्थं कथयति –

**वृत्तिभेदैस्त्रिभिर्युक्ता स्रोतोभिरिव जाह्नवी।**
**भारती भाति गम्भीरा कुटिला सरला क्वचित्॥ इति।**

यथा गम्भीर-कुटिल-सरलैः त्रिभिः प्रवाहैः युक्ता गङ्गा शोभिता भवति तथैव तिसृभिःवृत्तिभिः युक्ता वाणी कदाचित् गम्भीरा कुटिला सरला च भवति। अत्र गम्भीरपदेन व्यञ्जना, कुटिलपदेन लक्षणा, सरलपदेन च अभिधा स्वीक्रियते। व्यञ्जना गम्भीरा भवति इत्यस्य तात्पर्यं तावत् – यथा वाच्यार्थः स्पष्टतया प्रतीयते व्यङ्ग्यार्थः न तथा स्पष्टतया भासते। यथा गम्भीरस्य पुरुषस्य मनोगतं सारल्येन सर्वैः अवगन्तुं न शक्यते तथैव व्यङ्ग्यार्थस्य ज्ञानमपि न साधारणानाम्, अपि तु सहृदयानामेव भवति। अतः एतादृशस्य गम्भीरस्य व्यङ्ग्यार्थस्य बोधिका व्यञ्जना अपि गम्भीरा एव भवति।

आशाधरभट्टः पुनः अभिधायाः गङ्गानद्या सह, लक्षणायाः यमुनानद्या सह व्यञ्जनायाश्च सरस्वतीनद्या सह साम्यम् उक्त्वा वाणीं त्रिवेणीरूपेण प्रदर्शयति। यथा सरस्वती भूम्यन्तरस्था जनानाम् अगोचरा भवति, तथैव व्यञ्जना अपि साधारणानाम् अगोचरा सहृदयैकगम्या भवति। इयं च व्यञ्जना निपुणैरेव अवगम्यते। तथाहि अस्ति प्रसिद्धिः –

**शक्तिं भजन्ति सरला लक्षणां चतुरा जनाः।**
**व्यञ्जनां नर्ममर्मज्ञाः कवयः कमना जनाः॥ इति।**

## २२.१.१) व्यञ्जनायाः भेदाः

व्यञ्जनावृत्तेः नैके भेदाः विश्वनाथकविराजेन साहित्यदर्पणग्रन्थस्य द्वितीये परिच्छेदे निरूपिताः। तथाहि तन्मते व्यञ्जना प्राधान्येन द्विविधा – शाब्दीमूला आर्थीमूला चेति।

### शाब्दीमूला व्यञ्जना

शाब्दीमूला व्यञ्जना पुनः द्विविधा – अभिधामूला लक्षणामूला चेति।

### अभिधामूला व्यञ्जना –

अभिधामूलायाः व्यञ्जनायाः लक्षणं तावत् प्रतिपादितं साहित्यदर्पणे –

अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।

एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया॥ इति। (२/१४)

अर्थः – एकस्य शब्दस्य बहवः अर्थाः भवन्ति चेत् संयोगादिभिः एकस्मिन् अर्थे अभिधया नियन्त्रिते या शब्दस्य अन्यार्थबोधे कारणीभूता वृत्तिः सा अभिधामूला व्यञ्जना इत्युच्यते।

उदाहरणम् –

दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा

प्रोद्योद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः।

नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्

गामाक्रम्य विभूतिभूषिततनू राजत्यूमावल्लभः॥ इति।

**अर्थः** – अयं श्लोकः उमानामिकायाः राजमहिष्याः पत्युः भानुदेवस्य स्तुतिपरकः। अतः प्रकरणवशात् अभिधावृत्त्या अयं श्लोकः भानुदेवस्यैव प्रशंसाबोधकः। परन्तु अत्र शब्दसन्निवेशः कविना तथा कृतः येन उमापतेः महादेवस्यापि बोधः भवति। अन्तिमे महादेवभानुदेवयोः मध्ये उपमानोपमेयभावः ध्वनितः भवति। तथाहि दुर्गालङ्घितविग्रहः रिपूणां दुर्गं भित्त्वा अपि तैः सह सङ्ग्रामकारी अथवा दुर्गव्यवधानं विनैव युद्धकारी, मनसिजं कामं तेजसा कान्त्या सम्मीलयन् भस्मीकुर्वन्, कामदेवात् अपि सुन्दरः इति तदर्थः, प्रोद्यद्राजकलः अधीनीकृतसर्वमहाराजः, गृहीतगरिमा प्राप्तगौरवः, भोगिभिः पुरुषैः, विष्वग्वृतः सर्वतः परिवेष्टितः नक्षत्रेशकृतेक्षणः क्षत्रियश्रेष्ठेषु अपि तुच्छबुद्धिः, गिरिगुरौ महादेवे, गाढां प्रबलां, रुचिं भक्तिं, धारयन् पृथिवीं पराक्रमेण आयत्तीकृत्य, विभूतिभूषिततनुः ऐश्वर्यादिभिः अलङ्कृतशरीरः, उमावल्लभः उमानाम्न्या राज्ञ्याः वल्लभः भानुदेवः राजति दीप्यते इति एतादृशः प्राकरणिकः अर्थः प्रथमम् अभिधया एव प्रतिपाद्यते।

परन्तु अस्य श्लोकस्य दुर्गालङ्घितविग्रहः, सम्मीलयन्, राजकलः, भोगि, नक्षत्रेशः, गिरिगुरुः, गाम्, विभूतिः, उमा चेति पदैः शङ्करस्तुतिपरकः अर्थः अपि बुध्यते। तथाहि दुर्गालङ्घितविग्रहः अर्धनारीश्वरत्वेन पार्वत्याः शरीरार्द्धशरीरः मनसिजं कामं तेजसा तृतीयनयनोत्थज्योतिषा सम्मीलयन् नाशयन् प्रोद्योद्राजकलः चन्द्रशेखरः गृहीतगरिमा ईश्वरत्वेन जगत्सु प्राप्तगौरवः, भोगिभिः सर्पैः विष्वक् सर्वतः वृतः परिवेष्टितः नक्षत्रेशकृतेक्षणः चन्द्रचक्षुः हिमालयनामके श्वशुरे अत्यन्तमनुरागम् आश्रयन् भस्मभूषितशरीरः उमापतिः शिवः गां वृषभम् आक्रम्य आरुह्य राजते शोभते इति शिवपरकः अर्थः व्यञ्जनया बुध्यते। एवम् अत्र प्रकरणेन अभिधेये उमावल्लभशब्दस्य उमानामकमहादेवीवल्लभभानुदेवनृपतिरूपे अर्थे नियन्त्रिते व्यञ्जनया गौरीवल्लभरूपः अर्थः बोध्यते इति अभिधामूला शाब्दीव्यञ्जना।

**लक्षणमूला शाब्दीव्यञ्जना –**

लक्षणमूलायाः शाब्दीव्यञ्जनायाः लक्षणं तावत् साहित्यदर्पणे –

लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।

यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया॥इति।

अर्थः – यस्य प्रयोजनस्य कृते लक्षणा आश्रीयते, तत्प्रयोजनं यया वृत्त्या प्रतीयते सा व्यञ्जना लक्षणामूला भवति।

उदाहरणम् – यथा गङ्गायां घोषः इति। अत्र शीतत्वपावनत्वयोः आतिशय्यं प्रयोजनम्। तच्च प्रयोजनं व्यञ्जनया वृत्त्या साध्यते। तथाहि अत्र गङ्गापदस्य प्रवाहरूपार्थं बोधयित्वा अभिधा विरता भवति। ततः गङ्गापदस्य प्रवाहरूपार्थेन घोषपदस्य अन्वयानुपपत्त्या लक्षणया वृत्त्या गङ्गापदेन तटरूपार्थस्य बोधः

भवति। एवं गङ्गापदस्य तटरूपार्थं बोधयित्वा लक्षणा अपि उपक्षीणा भवति। ततः शीतत्वस्य पावनत्वस्य च आधिक्यं यया वृत्त्या बोध्यते सा वृत्तिः भवति लक्षणमूला व्यञ्जना।

### आर्थी व्यञ्जना

वक्तुः, बोद्धव्यस्य, वाक्यस्य, प्रकरणस्य, देशस्य, कालस्य, काकोः, अङ्गभङ्ग्यादिचेष्टादीनां च वैशिष्ट्यात् यया शब्दशक्त्या अन्यस्य अर्थस्य बोधः भवति सा आर्थी व्यञ्जना इत्युच्यते। तथाहि उच्यते साहित्यदर्पणे –

वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।

प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च।

वैशिष्ट्यादन्यमर्थं या बोधयेत्साऽर्थसम्भवा॥ इति।

उदाहरणम् –

कालो मधुः कुपित एष च पुष्पधन्वा धीरा वहन्ति रतिखेदहराः समीराः।

केलीवनीयमपि वञ्जुलकुञ्जमञ्जुर्दूरे पतिः कथय किं करणीयमद्य॥ इति।

अर्थः – एषः अनुभूयमानः कालो मधुः वसन्तकालः, पुष्पधन्वा मदनश्च कुपितः, धीरा मन्दा अत एव रमणजनितश्रमोपशमनसमर्थाः समीराः वायवः वहन्ति वान्ति। इयमपि केलिवनी अल्पोद्यानं वञ्जुलकुञ्जेन अशोकशाखावृतस्थानेन मञ्जुर्मनोज्ञा। दूरे च पतिर्भर्ता न तु प्रियः। तस्माद् अद्य किं करणीयं तत् त्वं कथय भण। अत्र वक्त्र्याः नायिकायाः मदनविह्वलत्वादिवैशिष्ट्ययोगात् एतं देशं प्रति शीघ्रं प्रच्छन्नकामुकम् एकं प्रेषय इति अर्थः व्यज्यते।

इदं दिङ्मात्रमुदाहरणम्। अन्यानि उदाहरणानि साहित्यदर्पणादिग्रन्थान्तरेषु अन्वेष्टव्यानि।

इयम् आर्थी व्यञ्जना पुनः अर्थस्य वाच्यलक्ष्यव्यङ्ग्यरूपेण त्रिविधतया प्रत्येकमुक्तानां मध्ये एकैका एव त्रिविधा। तस्मात् असङ्ख्यप्रकारा इयम् आर्थीव्यञ्जना।

शङ्का - शाब्द्यां व्यञ्जनायाम् अर्थस्य, आर्थ्यामपि व्यञ्जनायां शब्दस्य उपयोगिता अस्ति। अतः किमर्थं तयोः पृथक्तया निर्देशः इति चेदुच्यते शब्दस्य अर्थस्य च व्यञ्जकत्वे अन्यस्य सहकारिकारणत्वं स्वीकरणीयम्।

इयं व्यञ्जना प्रकृति-प्रत्यय-उपसर्ग-निपात-वर्णरचनादिषु अपि तिष्ठति। यथा -

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं

रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।

करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं

वयं तत्त्वान्वेषान्मधुकर, हतास्त्वं खलु कृती॥ इति।

अर्थः – अभिज्ञानशाकुन्तले शकुन्तलां व्याकुलयन्तं भ्रमरं प्रति दुष्यन्तस्योक्तिरियम्। हे मधुकर भ्रमर त्वं तव दंशनभयात् चलौ चञ्चलौ अपाङ्गौ नेत्रप्रान्तभागौ यस्यास्ताम्, अत एव वेपथुमतीं कम्पमानाम् अतिचपलां दृष्टिं स्पृशसि, रहस्याख्यायी इव गुप्तविषयभाषी इव कर्णान्तिकचरः श्रवणेन्द्रियसमीपचारी सन्

मृदु कोमलम् अस्फुटं वा यथा स्यात् तथा स्वनसि शब्दं करोषि, तथा करं हस्तं व्याधुन्वत्याः तवापसारणाय इतस्ततो विलोकयन्त्याः शकुन्तलायाः रतिसर्वस्वं रतेः सुरतेच्छायाः सर्वस्वं प्रधानकारणम् अधरं दन्तच्छन्दं पिबसि दशसि अत एव वयम् अहं राजा इत्यर्थः, तत्त्वान्वेषात् किं ब्राह्मणस्य औरसकन्यात्वेन मम परिणयस्य अयोग्या अथवा तस्य क्षत्रियकन्यात्वेन मम परिणययोग्या इत्येवं तत्त्वस्य अन्वेषणात् हताः अत्यन्तम् आकुलतया मृतप्रायाः इत्यर्थः। अत्र श्लोके हताः इति प्रयुक्तम्, न तु दुःखं प्राप्तवन्तः इति प्रयुक्तम्। हताः इत्यस्य प्रयोगात् एव दुःखातिशयरूपः व्यङ्ग्यार्थः प्रतीयते। अत्र हन्धातुरूपा या प्रकृतिः तत्रैव व्यञ्जना तिष्ठति।

एवम् अन्यानि अपि उदाहरणानि ज्ञातव्यानि।

व्यञ्जनासिद्धिः – व्यञ्जना हि अभिधालक्षणादिसकलवृत्तिभ्यः भिन्ना कवि-आलङ्कारिकसम्प्रदायप्रसिद्धा अभिनवा एव वृत्तिः। इयं व्यञ्जना रस-रसाभास-भाव-भावाभासादीनां बोधाय अवश्यमेव आलङ्कारिकैः स्वीकर्तव्या। इयं च वृत्तिः प्रथमतः आनन्दवर्धनाचार्येण ध्वन्यालोकग्रन्थे प्रतिपादिता। तथाहि ईश्वरसङ्केतेन शब्दे स्थिता स्वाभाविकी वृत्तिः भवति अभिधा। इयं च अभिधा शब्दस्य वाच्यार्थमेव कथयति। लक्षणा तु प्रयोजनादिनिमित्तात् मुख्यार्थबाधमुत्पाद्य वक्त्रा एव शब्दोपरि समारोपिता कृत्रिमा वृत्तिः। व्यञ्जना तु प्रकरणवक्तृबोद्धव्यादिनिमित्तमाश्रित्य समुन्मीलिता वृत्तिः।

नियमः अस्ति शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति। शब्दस्य, बुद्धेः, कर्मणः च व्यापारः समाप्तश्चेत् पुनः तस्य व्यापारः न भवति इति तदर्थः। यथा देवदत्तः ग्रामं गच्छति इत्यत्र अभिधावृत्त्या आदौ सर्वेषां पदानां पृथक् पृथक् अर्थबोधः भवति। ततः वाच्यार्थमुक्त्वा अभिधा विरता भवति। ततः तात्पर्यवृत्त्या कर्तृत्वकर्मत्वादिरूपेण सर्वेषाम् अन्वये सति एकवाक्यार्थः सम्पद्यते। तात्पर्यानुपपत्तिश्चेत् लक्षणा स्वीक्रियते। यथा गङ्गायां घोषः इत्यत्र अभिधावृत्त्या गङ्गाशब्देन जलप्रवाहरूपस्य अर्थस्य बोधः भवति। घोषशब्देन च आभीरपल्लीरूपार्थस्य बोधः। एवं मुख्यार्थे ज्ञाते तात्पर्यस्य अनुपपत्तिः भवति, जलप्रवाहे आभीरपल्ल्याः अवस्थानं कदापि न सम्भवति इति कारणात्। अतः लक्षणावृत्त्या गङ्गापदं सामीप्यसम्बन्धेन स्वसम्बन्धिनं तटरूपार्थं बोधयति। ततः लक्षणया गङ्गातटे घोषः इति अर्थः भवति। एवम् अभिधा-तात्पर्य-लक्षणाख्यानां तिसृणां शक्तीनां स्वार्थबोधनेन विरमात् रसादीनां बोधनाय तुरीया काचित् वृत्तिः सर्वैः अवश्यम् अङ्गीकर्तव्या।

अभिधा न व्यङ्ग्यार्थबोधिका - अभिधा हि सङ्केतितार्थं बोधयित्वा विरता भवति। अतः तस्य रसादिव्यङ्ग्यार्थबोधने नास्ति पुनः सामर्थ्यम्। अत्र केचन आक्षिपन्ति - सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः इति। एतस्य तात्पर्यं तावत् केनचित् बलवता सैनिकेन प्रेरित एक एव बाणः एकेनैव वेगाख्येन व्यापारेण रिपोर्वर्मच्छेदं मर्मभेदं प्राणहरणञ्च विधत्ते, तथा सुकविप्रयुक्तः एक एव शब्दः एकेन एव अभिधाव्यापारेण पदार्थोपस्थितिम् अन्वयबोधं व्यङ्ग्यार्थप्रतीतिं च विधत्ते। अतः व्यङ्ग्यः अर्थः तेषां मते वाच्यः एव। किञ्च, विवक्षितार्थं बोधयित्वा एव अभिधा विरता भवति न ततः पूर्वम्। अतः व्यञ्जना न स्वीकर्तव्या इति केषाञ्चित् अभिमतम्। अत्र समाधानं – शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः

इति। अर्थात् वाचकस्य शब्दस्य सकृच्छाब्दबोधमुत्पाद्य पुनरभिधा अर्थान्तरबोधने असमर्था भवति इति। तेन सङ्केतितार्थमेव बोधयित्वा विरता अभिधा पुनः अर्थान्तरं न प्रकाशयति इति भावः।

तात्पर्यवृत्तिः न व्यङ्ग्यबोधिका – दशरूपककर्तुः धनिकस्य मते व्यञ्जना तात्पर्यवृत्तौ एव अन्तर्भवति। किञ्च तात्पर्यवृत्तिप्रतिपाद्यः एव व्यङ्ग्यः। ननु तात्पर्याख्या वृत्तिः पदानां सम्बन्धमात्रबोधनेन उपक्षीणा भवति। अतः सा कथं व्यङ्ग्यार्थान् बोधयेत्, कथं वा अतिरिक्तस्वरूपा च व्यञ्जना तदन्तर्गता भवति इति चेत् तेन उच्यते तात्पर्यं हि यावत्कार्यप्रसारि भवति। अर्थात् धनिकमते तात्पर्यवृत्तेः सीमा न निर्धारितः। अतः सा वृत्तिः अधिकं व्यङ्ग्यादिकमपि बोधयति इति मन्तव्यम्। अतः व्यञ्जना न स्वीकर्तव्या इति चेत् अत्रापि शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति समाधानम्। तथाहि तात्पर्यवृत्तिरपि वाक्यघटकपदानां संसर्गमात्रं जनयित्वा नष्टसामर्थ्या सती व्यङ्ग्यार्थमुत्पादयितुं न समर्था इति भावः।

ननु शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति न्यायस्वीकारे नास्ति काचित् राजाज्ञा। अयं न्यायः मीमांसकमतमात्रपरः। अतः अप्रामाणिकः अयं न्यायः न सर्वैः अभ्युपगन्तव्यः इति चेत् अत्रोच्यते – यदि दीर्घदीर्घतराभिधाव्यापारेण अभीष्टार्थसिद्धिः सम्भवति तदा लक्षणा अपि न स्वीकर्तव्या भवति। किञ्च, ब्राह्मण कन्या ते गर्भिणी इति वाक्यश्रवणानन्तरम् अविवाहितायाः कन्यायाः पुत्रोत्पत्तिवार्ताश्रवणेन शोकः, पुत्रस्ते जातः इति वाक्यश्रवणेन ब्राह्मणस्य हर्षः उत्पद्यते। एवं हर्षशोकादिप्रतीतिः हर्षशोकादिबोधक-मुखप्रसादमालिन्यादिभिः अनुमानात् प्रतीयते। परन्तु अभिधा दीर्घदीर्घतरव्यापारात्मिका इति स्वीकारे हर्षशोकादीनामपि वाच्यत्वं स्वीकरणीयम्। परन्तु हर्षशोकादिभावानां वाच्यत्वं केनापि न स्वीकृतम्। अतः सोऽयम् इषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः इति न्यायः न स्वीकरणीयः।

लक्षणा न व्यङ्ग्यार्थबोधिका –

शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति नियमेन गङ्गायां घोषः इत्यादौ लक्षणा तटाद्यर्थमात्रं बोधयित्वा विरता न पुनः अपि शीतत्वपावनत्वादिव्यङ्ग्यार्थबोधने न सक्षमा भवति।

अतः व्यञ्जनानामिका चतुर्थी वृत्तिः अवश्यं स्वीकर्तव्या इति आयाति।

## २२.९.२) व्यञ्जनावृत्तेः माहात्म्यम्

व्यङ्ग्यार्थः वाच्यार्थात् सर्वथा भिन्नः एव भवति। अधस्तात् ध्वन्यालोकग्रन्थे निरूपिताः केचन श्लोकाः उदाहरणरूपेण उपस्थाप्यन्ते।

१. कदाचित् वाच्ये विधिरूपे प्रतिषेधरूपः –

भ्रम धार्मिक विश्रब्ध सः शुनकोऽद्य मारितस्तेन।

गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति।

अर्थः – हालककविकृतगाथासप्तशत्यां द्वितीये शतके गोदावरीनदीतीरे कुञ्जे कृतसङ्केतायाः कुलटायाः तत्रैव प्रतिदिनपुष्पावचयनेन तत् सङ्केतभञ्जकं स्वपोषितकुक्कुरोपद्रवेणापि अनिवृत्तं धार्मिकं

प्रति तस्या एव दिनान्तरे उक्तिरियम्। हे धार्मिक अद्य विश्वस्तः कुक्कुरोत्पाताभावेन आश्वस्तहृदयः सन् भ्रम पुष्पावचयनाय पर्यट। येन गोदावरीनद्याः यः कच्छः जलप्रायदेशः तटस्तत्र यत्कुञ्जं लतावृतस्थानं तत्र निवासिना विख्यातेन दृप्तसिंहेन यो दिनान्तरे त्वामुद्वेजयति स श्वा तव उपद्रावकः कुक्कुरः मारितः इति श्लोकार्थः। एतावद्दिनपर्यन्तं तव कुक्कुरोपद्रव एवासीत्, अद्य तु साक्षात् दृप्तः सिंह एव उपस्थितः, एवं स्थितौ यदि अद्यापि तत्र भ्रमणं करिष्यसि तदा मरणमेव भावि इति कथमपि तत्र मा भ्रम इति व्यज्यते। वस्तुतः अत्र अभिधावृत्त्या भ्रम इति विधिरेव बोध्यते। परन्तु व्यञ्जनावृत्त्या मा भ्रम इति निषेध एव व्यक्तः भवति।

२. क्वचिद् वाच्ये प्रतिषेधरूपे विधिरूपो यथा –

श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय।

म पथिक रात्र्यन्ध शय्यायामावयोः शयिष्ठाः॥ इति।

अर्थः – हालकविकृतायां गाथासप्तशत्यां सप्तमशतके ६३-तमं पद्यमिदम्। पूर्वरात्रौ सुरताय निजभ्रमेण एकास्तरणशयनविधायिनीं श्वश्रूं विधृत्य अनर्थविधायिनं प्रोषितं रात्र्यन्धत्वेन परिचायितस्वरूपम् उपपतिं प्रति स्वयं दूत्याः कुलटायाः उक्तिरियम्। अत्र शय्याया अस्मिन् पार्श्वे श्वश्रूः निमज्जति जरत्तरत्वेन निष्पन्दा शेते, अत एव ततो न किञ्चिदाशङ्कनीयम् इत्याशयः। अत्र अस्मिन् पार्श्वे अहं स्वपिमि इति शेषः। अत्र स्वापबोधकपदस्य अप्रयोगात् कुलटायाः मन्मथपीडया निद्राराहित्यं द्योत्यते। हे पथिक प्रवासिन् मम शय्यायाम् अस्मदीयास्तरणे मा निमङ्क्ष्यसि पार्श्वपरिवर्तनादिभिः इतस्ततो न विलुण्ठिष्यसि। अत्र मा शयिष्ठाः इति निषेधरूपार्थः वाच्यः, परन्तु शयिष्ठाः इति विधिरूपार्थः व्यङ्ग्यः।

३. क्वचिद्वाच्याद् विभिन्नविषयत्वेन व्यवस्थापितो यथा –

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।

सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥ इति।

अर्थः – स्वकान्ताया उपपतिदष्टमधरं वीक्ष्य रुष्टे प्रोषितागते पत्यौ निरपराधत्वबोधनाय प्रतारयन्त्याः सख्याः उक्तिरियम्। प्रियायाः स्वप्रियतमायाः सव्रणं व्रणसहितम् अधरम् अधरोष्ठं दृष्ट्वा कस्य वा पत्युः रोषो न भवति अपि तु सर्वस्यापि रोषो भवत्येव इति भावः। एतेन अस्याः न कोऽपि दोष इति व्यज्यते। हे भ्रमरसहितपद्माघ्राणशीले प्रतीपाचरणात् प्रतिकूले त्वम् इदानीं पत्युः तर्जनां भ्रमरदंशनजन्यवेदनां च सहस्व इति श्लोकार्थः। अत्र वाच्यार्थबोधे सखी उद्देश्या तथा भ्रमरेणास्य अधरो दष्टः न पुनरुपपतिना इति व्यङ्ग्यार्थबोधे कान्त उद्देश्य इति विषयभेद इत्यर्थः। किञ्च अत्र ममैवं वैदग्ध्यम् इति प्रतिवेशिनी विषयः, इदं मया समाहितं पुनरेवं चेत् त्वया एव समाधेयम् इति उपपतिः विषयः, भ्रमरेण अस्याः अधरः खण्डितः, न तु भर्त्रा इति त्वया ईर्ष्या न विधेया इति सपत्नी विषयः, सरलतरेयं न किञ्चित्प्रपञ्चं जानाति इत्यस्य साध्वीविषयः, नान्यथा शङ्कनीया इत्यस्य श्वश्रूः विषयः इत्येवं विषयभेदेन व्यङ्ग्यार्थाः अपि भिन्ना भिन्नाः भवन्ति।

एवं वाच्यार्थात् सर्वथा भिन्नस्य व्यङ्ग्यार्थस्य प्रतिपादनाय व्यञ्जना नाम तुरीया वृत्तिः अवश्यम् आलङ्कारिकैः अङ्गीकर्तव्या इत्येव आयाति।

## पाठगतप्रश्नाः-४

२९. व्यञ्जनायाः लक्षणं लिखत।

३०. व्यञ्जना मूलतः कतिविधा।

३१. शाब्दीमूला व्यञ्जना कतिविधा। ताः काः।

३२. लक्षणा व्यङ्गार्थबोधिका अस्ति न वा।

३३. अभिधा व्यङ्गार्थबोधिका अस्ति न वा।

## २२.१०) तात्पर्यवृत्तिः

आलङ्कारिकैः मुख्यतया तिस्रः एव वृत्तयः अङ्गीकृताः। परन्तु तात्पर्याख्या अन्यैका वृत्तिः वर्तते इति केषाञ्चन विदुषाम् अभिप्रायः। तत्र साहित्यदर्पणकारः पण्डितविश्वनाथकविराजः अन्यतमत्वं भजते। साहित्यदर्पणकारः तात्पर्यवृत्यङ्गीकरणे किं ब्रूते इति वयम् अस्मिन् पाठे पश्यामः।

### २२.१०.१) तात्पर्यवृत्तेः लक्षणम्

साहित्यदर्पणकारमते अभिधया लब्धः अर्थः वाच्यार्थः इत्युच्यते। अत्र कश्चन संशयः ग्रन्थकारैः उच्यते। ननु अभिधया अस्मात् शब्दाद् अयमर्थो बोद्धव्यः इत्याकारकं ज्ञानं भवति। तेन अभिधावृत्या प्रतिपदम् अर्थस्तु ज्ञायते परन्तु वाक्ये पदसमूहत्वात् पदानां परस्परम् अर्थावगते सति तेषां पदार्थानाम् अन्वयेन पूर्णवाक्यार्थज्ञानं तु न सम्भवति। यतो हि अभिधावृत्तिः पदस्य अर्थं प्रतिपाद्य एव विरता भवति। न हि विरतः कश्चित् पुनः कार्ये प्रवर्तेत। शब्दबुद्धिकर्मणां विरम्यव्यापाराभावः इति न्यायेन न हि विरतया अभिधया पुनः वाक्यार्थावबोधः सम्भवेत्। ननु पदार्थानां ज्ञान जाते सति कथं वाक्यार्थप्रतीतिः इति चेदुच्यते यत् तात्पर्याख्यया वृत्त्या एव पदार्थानां मध्ये अन्वयसम्पादनेन पूर्णवाक्यता सिद्ध्यति। तस्मात् इयं विलक्षणा वृत्तिः तात्पर्याख्या अङ्गीकार्या एव।

तात्पर्यवृत्तेः दर्पणग्रन्थोक्तं लक्षणं तावत् -

**तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।**
**तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे॥ इति।**

परे भाट्टमीमांसकाः प्राचीननैयायिकाश्च, पदार्थानाम् अभिधया लक्षणया वा उपस्थितानाम् अर्थानाम्, अन्वयबोधने परस्परं यथासम्भवं सम्बन्धबोधने,तात्पर्यार्थं तात्पर्याख्यां वृत्तिं आहुः उक्तवन्तः विचक्षणाः इति श्लोकस्यास्य सरलार्थः।

उदाहरणं तावत् - शरीरमाद्यं खलु धर्मसाधनम् इति। अत्र शरीरपदे अभिधया स्थूलदेहः इत्यर्थः लभ्यते, आद्यम् इत्यस्य प्रथमम् इत्यर्थः, खलु इति निश्चयार्थकम् अव्ययपदम्। धर्मसाधनम् इत्यस्य अभिधया धर्मस्य प्राप्तये उपायीभूतम् इत्यर्थः आगच्छति। एवं सति न अर्थविवेकः जायेत। तस्मात् अत्र तात्पर्यवृत्त्या पदार्थानाम् अन्वयेन एकवाक्यार्थः आगच्छति - शरीरमेव धर्मस्य प्राप्तये प्रथमं उपायभूतम् इति। इत्थम् अर्थप्रतीतौ इयं वृत्तिः अपेक्षते। तस्मात् इयं तात्पर्यार्थवृत्तिः स्वीकार्या।

## २२.१०.२) तात्पर्यवृत्त्याः अङ्गीकरणे सम्प्रदायभेदाः

अत्र विद्यते वैमत्यं मीमांसकानां मध्ये अस्याः वृत्तेः स्वीकारप्रसङ्गे। अत्र पक्षद्वयं समापतति। तच्च – अन्विताभिधानवादिनः अभिहितान्वयवादिनः च।

### अन्विताभिधानवादः

प्राभाकराः गुरवो वा अन्विताभिधानवादिनः इत्युच्यन्ते। तथाहि एतेषां नये तात्पर्यवृत्तेः प्रयोजनं नास्ति। तथाहि "सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः" इति न्यायेन अभिधायाः यावत्कार्यप्रसारित्वात् तया एव अभिधावृत्त्या पदार्थाः परस्परम् अन्विताः भूत्वा एव अभिहिताः भवन्ति। तेन तेषां पदानाम् अन्वयपूर्वकमेव अर्थप्रतीतौ पुनः अन्वयबोधनं नापेक्षते। तन्मते आदौ क्रियाकारकयोः मध्ये अन्वयबोधो जायते। तत्पश्चात् पदविशेषसमभिव्याहारात् विशेषस्मृतिः उत्पद्यते। तथाहि अन्वितघटे एव घटपदस्य शक्तिः। शाब्दबोधे तु आकाङ्क्षादिवशात् वृत्तितादिविशेषरूपमेव भासते। अतः तात्पर्या वृत्तिः नापेक्षते इति तेषाम् अभिप्रायः।

### अभिहितान्वयवादः

भाट्टाः अभिहितान्वयवादिनः इत्युच्यन्ते। तेषां नये अभिधया केवलं पदार्थाः एव उपलभ्यन्ते, न तु पदार्थानाम् अन्वयबोधने अभिधायाः क्षमत्वम्, तस्याः अर्थप्रतिपादनानन्तरं विरमणात्। तस्मात् अन्वयबोधने तात्पर्या वृत्तिः अपेक्षिता एवेति तेषामभिप्रायः। अतः तात्पर्यवृत्तिः अङ्गीकार्या एव।

### दर्पणकाराभिमतम्

साहित्यदर्पणकारः पण्डितविश्वनाथकविराजः भाट्टानाम् अर्थात् अभिहितान्वयवादिनां मतमेव स्वीकरोति। तन्नये पदार्थबोधः नाम क्रियाकारकयोः मध्ये सम्बन्धः इति तु सत्यम्। परन्तु केवलम् अन्विते एव शक्तिः कुतः, क्रियाकारकयोः मध्ये सम्बन्धज्ञानसमयेऽपि अन्वयो जायते। तेन तत्र अन्वयसम्भवात् तत्र अभिधा प्रवर्तिता एव। अभिधा तथाविधम् अर्थं प्रतिपाद्य विरता। पुनः अन्वितेऽपि सा न प्रवर्तेत। ततः विशेषरूपं न अवभास्यते पुनः अभिधायाः प्रवृत्त्यनसम्भवात्। तदा तात्पर्यवृत्त्या एव वाक्यार्थः अवगम्यते। तस्मात् तात्पर्या वृत्तिः अङ्गीकार्या इति साहित्यदर्पणकारस्य पण्डितविश्वनाथकविराजस्य मतम् इति शिवम्॥

## पाठगतप्रश्नाः-६

३४. साहित्यदर्पणस्थं तात्पर्यवृत्तिलक्षणं लिखत।

३५. तात्पर्यवृत्तिप्रसङ्गे उक्तस्य पक्षद्वयस्य नाम किम्।

३६. दर्पणकारः कं मतम् अङ्गीकरोति।

३७. के अन्विताभिधानवादिनः।

३८. के अभिहितान्वयवादिनः।

## पाठसारः

साहित्यशास्त्रे वृत्तिः अत्यन्तं सुप्रसिद्धा विद्यते। वृत्तेः भेदम् अवलम्ब्य विदुषां मतपार्थक्यं दरीदृश्यते। सा च वृत्तिः त्रिविधा चतुर्विधा वा। अभिधा, लक्षणा, व्यञ्जना, तात्पर्यम् इति भेदात्। का नाम अभिधा। शब्दो येन व्यापारेण वृत्त्या वा लोकप्रसिद्धम् अर्थं बोधयति स व्यापारो वृत्तिर्वा अभिधा इत्युच्यते। आचार्यमम्मटेन तस्य काव्यप्रकाशग्रन्थे अभिधालक्षणं निरूपितं– "स मुख्याऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते" इति। यथा घटमानय इति एकं वाक्यं श्रुतम्। ततः परम् अभिधावृत्त्या घटशब्दस्य कम्बुग्रीवादिमान् पिण्डः इति अर्थः बोध्यते। प्रकृते घटशब्दस्य सङ्केतितार्थः कम्बुग्रीवादिमान् पिण्डः। यतो हि अस्मात् घटशब्दात् कम्बुग्रीवादिमान् पिण्डः इति अर्थः बोद्धव्यः इति ईश्वरेच्छा वर्तते। एवमेव आनय इत्यस्य अपि अभिधावृत्त्या आनयनरूपक्रियां बोधयति। एवञ्च मुख्यार्थप्रतिपादिकां वृत्तिम् आलोच्य लक्षणावृत्तिः आलोच्यते। आलङ्कारिकैः बहुधा आद्रियमानेषु विषयेषु अन्यतमा इयं वृत्तिः, तत्रापि च लक्षणा वृत्तिः। यदा अभिधया मुख्यार्थे प्रतिपादितेऽपि वाक्यस्य अर्थावगमः न भवति तदा इयं लक्षणा वृत्तिः प्रवर्तते। सा मुख्यार्थेन सह केनापि सम्बन्धेन सम्बद्धं कमपि भिन्नम् अर्थं लक्षयति। सः एव लक्ष्यार्थः इत्युच्यते। सा च लक्षणा पुनः अशीतिप्रकारा। तन्मध्ये षोडशभेदाः एव मुख्याः। पण्डितविश्वनाथकविराजः स्वकृतसाहित्यदर्पणे लक्षणायाः षोडशभेदान् विस्तरशः प्रतिपादितवान्। प्रस्तुतपाठेऽस्मिन् तन्मतानुसारेण लक्षणायाः भेदाः प्रदर्शिताः। साहित्यशास्त्रे व्यञ्जना अत्यन्तं प्रसिद्धा वृत्तिः। अभिधा, लक्षणा तात्पर्यं चेति याः तिस्रः वृत्तयः वर्तन्ते ताः यदा स्वं स्वम् अर्थं बोधयित्वा क्षीणशक्तयः भवन्ति तदा यया वृत्त्या वाच्यलक्ष्यार्थापेक्षया कश्चिद् भिन्नः अर्थः बोध्यते सा वृत्तिः व्यञ्जना इत्युच्यते। इयं व्यञ्जना शब्दनिष्ठा, अर्थनिष्ठा, प्रकृतिनिष्ठा, प्रत्ययनिष्ठा निपातादिनिष्ठा च भवति। आलङ्कारिकैः यद्यपि तिस्रः एव वृत्तयः स्वीकृताः तथापि इयं तात्पर्याख्या वृत्तिः अवश्यम् अङ्गीकरणीया इति साहित्यदर्पणकारस्य मतम्। तत्र कारणं तावत् - अभिधावृत्त्या पदानाम् अर्थाः ज्ञायन्ते। परन्तु केवलं पदार्थाः ज्ञाताश्चेदेव न पूर्णावाक्यार्थावबोधो जायेत। तस्मात् पूर्णवाक्यार्थप्राप्तये या वृत्तिः अपेक्षते सा तात्पर्याख्या। प्रकृते पाठे तु वृत्तिचतुष्टयं समाश्रित्य आलोचना विहिता।

## पाठान्तप्रश्नाः

१. अभिधावृत्तिम् अवलम्ब्य लघुप्रबन्धं लिखत।

२. वृत्तिम् अवलम्ब्य लघुप्रबन्धं लिखत।

३. अभिधावृत्तेः लक्षणं संक्षेपेण विवृणोतु।

४. वृत्तेः प्रकारभेदम् अवलम्ब्य लघुप्रबन्धं लिखत।

५. सङ्केतग्रहणं कथं सम्भवति।

६. लक्षणां वर्णयत।

७. रूढिमूलां प्रयोजनवतीं च लक्षणां प्रतिपादयत।

८. लक्षणायाः षोडशभेदान् विस्तरेण वर्णयत।

९. उपादानलक्षणां सभेदं सोदाहरणञ्च प्रतिपादयत।

१०. लक्षणलक्षणां तद्भेदांश्च विस्तरेण सोदाहरणं वर्णयत।

११. व्यञ्जनावृत्तिं संक्षेपेण विवृणोतु।

१२. आर्थीव्यञ्जनां संक्षेपेण विवृणोतु।

१३. शाब्दीव्यञ्जनां संक्षेपेण विवृणोतु।

१४. तात्पर्यवृत्तिं सोदाहरणं परिचाययत।

१५. दर्पणस्थं तात्पर्यवृत्तिलक्षणं सोदाहरणं व्याख्यात।

१६. तात्पर्यवृत्त्यङ्गीकारे पक्षद्वयं तन्मतञ्च प्रतिपादयत।

१७. साहित्यदर्पणकारमतं स्पष्टीकुरुत।

१८. तात्पर्यवृत्तिः किम् अङ्गीकार्या उत न इति सप्रमाणं विवृणुत।

१९. अन्विताभिधानवादं विस्तरेण प्रतिपाद्य कथं तात्पर्यवृत्तिः न अङ्गीकार्या इति व्याख्यात।

२०. अभिहितान्वयवादं विस्तरेण प्रतिपाद्य कथं तात्पर्यवृत्तिः स्वीकार्या एव इति प्रतिपादयत।

## पाठगतप्रश्नानाम् उत्तराणि

१. परार्थाभिधानं वृत्तिः।

२. शक्तिः।

३. चतुर्विधा।

४. अभिधा, लक्षणा, व्यञ्जना, तात्पर्यः चेति।

५. अर्थबोधं प्रति अनुकूलः कश्चिद् व्यापारो वर्तते, स व्यापारः वृत्तिः।

६. अभिपूर्वकाद् धा-धातोः अङ्-प्रत्ययेन अभिधाशब्दोऽयम् निष्पन्नः।

७. "स मुख्याऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते" इति।

८. "तत्र सङ्केतितार्थस्य बोधनात् अग्रिमाभिधा"इति।

९. अस्माच्छब्दादयमर्थः बोद्धव्यः इतीश्वरेच्छा सङ्केतः।

१०. वाच्यार्थः।

११. मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।
रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता।।

१२. मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।।

१३. द्विविधः।

१४. मम्मटाचार्यः।

१५. पण्डितविश्वनाथकविराजः।

१६. शब्दस्य उपरि।

१७. मुख्यार्थस्य।

१८. लक्ष्यार्थः।

१९. द्विविधा, उपादानलक्षणा लक्षणलक्षणा च।

२०. अष्टप्रकारिका।

२१. श्वेतः धावति इति।

२२. गौर्वाहीकः इति।

२३. एतानि तैलानि हेमन्ते सुखानि इति।

२४. कुन्ताः प्रविशन्ति इति।

२५. राजा कण्टकं शोधयति इति।

२६. राजकुमाराः गच्छन्ति इति।

२७. कलिङ्गः साहसिकः इति।

२८. आयुः पिबति इति।

२९. विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।

३०. सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥ इति।

३१. द्विविधा।

३२. द्विविधा। अभिधामूला लक्षणामूला चेति।

३३. नास्ति

३४. नास्ति।

३५. तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे॥

३६. अभिहितान्वयवादपक्षः, अन्विताभिधानवादपक्षः च।

३७. अभिहितान्वयवादमतम्।

३८. प्राभाकराः।

३९. भाट्टाः।

॥ इति द्वाविंशः पाठः ॥

# २३

# छन्दसां मात्रागणयतिभेदाः

प्रस्तावना

मन्त्राः छन्दोबद्धाः भवन्ति। केवलं यजुर्वेदं परित्यज्य संहितात्रयं छन्दोमयं भवति। अतः छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्ते। अतः षट्सु वेदाङ्गेषु छन्दसः अन्तर्भावः भवति। वेदपुरुषस्य पादत्वेन छन्दसः कल्पना क्रियते। तथाहि प्रोक्तम् - "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते" इति। शौनकविरचिते ऋक्प्रातिशाख्ये अन्तिमभागे छन्दसां पर्याप्तं विवेचनं विद्यते। अस्य छन्दःशास्त्रस्य पिङ्गलच्छन्दःसूत्रनामा ग्रन्थः प्रथितः विद्यते। केनचित् पिङ्गलाचार्येण ग्रन्थः अयं विरचितः। अत्र वैदिकानि लौकिकानि च छन्दांसि विवेचितानि सन्ति। छन्दःशास्त्रम् अत्यन्तं प्राचीनम्। यास्काचार्यविरचिते निरुक्तग्रन्थे ब्राह्मणग्रन्थे च छन्दःशब्दस्य बहुधा निर्वचनं प्रदर्शितम्। ऐतरेयारण्यके आम्नातम् - "मानवान् पापकर्मभ्यः छादयन्ति छन्दांसि इति छन्दः" इति। तैत्तिरीयसंहितायाम् आम्नातम्- "देवा छन्दोभिरात्मानं छादयित्वा उपायन् प्रजापतिरग्निं चिनुत" इति। व्याकरणाचार्यस्य महर्षेः पाणिनेः मते तु छन्द्-धातोः छन्दःशब्दस्य व्युत्पत्तिः। प्रकृतपाठे अस्मिन् किञ्चित् छन्दोसम्बन्धिचर्चा प्रस्तूयते।

## उद्देश्यानि

इमं पाठं पठित्वा भवन्तः भवत्यः वा-

- अमुं पाठं पठित्वा भवान् -
  - छन्दसः सामान्यपरिचयं ज्ञातुं शक्नुयात्।
  - छन्दसां लक्षणानि ज्ञातुं प्रभवेत्।
  - छन्दसां वैशिष्ट्यानि वक्तुं शक्नुयात्।
  - छन्दसः भेदान् ज्ञातुं शक्नुयात्।
  - पद्यस्य लक्षणं ज्ञातुं शक्नुयात्।
  - वृत्तस्य लक्षणं प्रभेदान् च ज्ञातुं प्रभवेत्।
  - छन्दःशास्त्रस्य पारिभाषिकशब्दान् (गणान्, यतिं, दण्डकं च) ज्ञातुं शक्नुयात्।
  - गुरुस्वरस्य लक्षणादिकं ज्ञातुं प्रभवेत्।
  - छन्दसा श्लोकं रचयितुं योग्यो भवेत्।
  - श्लोकं वीक्ष्य किं छन्दः अस्ति इति ज्ञातुं प्रभवेत्।

## २३.१) छन्दसः लक्षणम्

छादयति आच्छादयति वा इति छन्दः। वैयाकरणपाणिनेः मते तु अभिप्रायार्थबोधकात् आनन्दपर्यायभुक्तार्थात् वा छदि-धातोः छन्दःशब्दस्य उत्पत्तिः जाता। यत् पापम् आच्छादयति, तत् छन्दः। अथवा यत् पापात् यजमानस्य पुरोहितस्य च आच्छादनं करोति, तत् छन्दः। तैत्तिरीयसंहितायां छन्दसः उत्पत्तिविषये एका आख्यायिका समुपलभ्यते। प्रजापतिः अग्निं चितवान्। स च अग्निः भयङ्करं रूपं धृतवान्। तम् अग्निं निधाय प्रजापतिः देवगणस्य सकाशे गतवान्। तत् भयङ्करं रूपं च वीक्ष्य देवाः अग्नेः सकाशं गन्तुं साहसं न कृतवन्तः। तदा देवाः छन्दसा शरीरम् आच्छाद्य अग्नेः सकाशं गत्वा अक्षततया पुनरागतवन्तः। छन्दसा शरीरम् आच्छादितवन्तः। अतः छन्दः इति नाम्ना सुप्रसिद्धम् अस्ति। ऐतरेयारण्यके कथयति - "मानवान् पापकर्मभ्यः छादयन्ति छन्दांसि इति छन्दः" इति। तैत्तिरीयसंहितायां प्रोक्तम्- "देवा छन्दोभिरात्मानं छादयित्वा उपायन् प्रजापतिरग्निं चिनुत" इति।

## २३.२) छन्दसः प्रकाराः

छन्दः वस्तुतस्तु लौकिकवैदिकभेदेन द्विविधं भवति। लौकिकच्छन्दस्तु पिङ्गलादीनाम् आचार्याणां मते मात्रावर्णविभेदेन द्विविधम्। तथाहि वृत्तरत्नाकरे प्रोक्तम्-

**"पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा।**
**मात्रावर्णविभेदेन च्छन्दस्तदिह कथ्यते॥" इति**

अर्थात् पिङ्गलाचार्यः छन्दः द्विविधम् अस्ति इति प्रोक्तवान्। ते च वैदिकम्, लौकिकञ्च इति। तत्रापि लौकिकं छन्दः मात्राभेदेन वर्णभेदेन पुनः द्विधा अस्ति।

## २३.३) पद्यस्य लक्षणम्

छन्दोमञ्जरीग्रन्थे पद्यलक्षणम् उक्तवान् - 'पद्यं चतुष्पदी' इति। चतुर्णां पादानां समाहारः चतुष्पदी इति। अत्र समाहारे ईप्रत्ययः। अर्थात् चतुष्पादात्मकं पद्यं भवति इति।

तेन छन्दःशास्त्र-पारिभाषिक-पाद-चतुष्टय-समाहारात्मक-वाङ्मयत्वं पद्यत्वमिति गङ्गादासस्य आशयः। इदञ्च पद्यं द्विविधं भवति। यथा - १) वृत्तपद्यम्, २) जातिपद्यम्।

तत्र अक्षरगणघटितं पद्यं वृत्तं, मात्रिकगणघटितं पद्यञ्च जातिः इत्युच्यते। वृत्तपद्यस्य उदाहरणानि भवन्ति वसन्ततिलकादयः। जातिच्छन्दस्य उदाहरणानि भवन्ति आर्यादयः इति तदुक्तं हि छन्दोमञ्जुर्याम्-

**"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।**
**वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्।। " इति।**

अर्थात् छन्दोबद्धं पद्यं भवति इति तु सामान्यलक्षणम्। छन्दोमञ्जुर्यां प्रोच्यते यत् पादचतुष्टयात्मकं पद्यं भवति इति। तच्च पद्यम् द्विविधं भवति। यथा वृत्तपद्यम्, जातिपद्यम् इति। अक्षराणां निर्दिष्टसंख्यया नियमितं निबद्धं च पद्यं वृत्तपद्यम्। अक्षरसंख्यातम् अक्षरैः एकद्वयादिवर्णैः संख्यातं परिगणितं यत् तत् वृत्तं नाम भवेत्। अस्य उदाहरणं भवति-

**"धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय॥"इति**

अस्मिन् श्लोके अक्षरसंख्यया पद्यं निर्धारितं भवति। संख्याम् आश्रित्य एव पद्यस्य गणना भवति। यथा - प्रकृतश्लोके अस्मिन् प्रत्येकं पादे अष्टौ वर्णाः सन्ति। तत्र जातिः नाम नियतमात्रिका। तदुक्तं छन्दोमञ्जर्यां - जातिर्मात्राकृता भवेत् इति। याः मात्राः अक्षरावयवरूपाः ताभिः कृता निवद्ध्या सा जातिः नाम भवेत्। यथा-

**"तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।**
**अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति"॥ इति।**

इति जातिरूपस्य पद्यस्य एतत् एकम् उदाहरणम्। मात्राम् आश्रित्य एव पद्यस्य गणना भवति। चरणस्य पादस्य वा मात्रासादृशतया पद्यस्य गणना भवति। वामकरतलेन एकवारं जानुमण्डलं परिक्रमणाय य समयः अपेक्षते, स मात्रापदवाच्यः भवति इति कविभिः प्रोक्तम्। मात्रा त्रिविधा भवति। ताश्च ह्रस्वमात्रा, दीर्घमात्रा, प्लुतमात्रा इति। यस्य उच्चारणाय एकमात्रिकः कालः अपेक्षते, स ह्रस्वः भवति। यस्य उच्चारणाय द्विमात्रिकः कालः अपेक्षते, स दीर्घः भवति। यस्य उच्चारणाय त्रिमात्रिकः कालः अपेक्षते, स प्लुतः भवति। व्यञ्जनवर्णस्य उच्चारणाय अर्धमात्रिककालः अपेक्षते। तथाहि प्रोक्तम्-

**"एकमात्रो भवेद् ह्रस्वः, द्विमात्रो दीर्घ उच्यते।**
**त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम्॥"इति।**

तथाहि वृत्तं नाम नियतगुरुलघुविन्यासम्। गुरुलघुविन्यासनियमनञ्च गणसाध्यम्। तथाहि म-य-र-स-त-ज-भ-ना अष्टौ गणाः। ते गणा ह्यक्षरगुरुलघुविन्यासभेदाद् विभिन्नाः भवन्ति।

## पाठगतप्रश्नाः-१

१. छन्दःशब्दस्य व्युत्पत्तिः का।
२. छन्दः वेदपुरुषस्य किम् अङ्गं भवति।
३. छन्दः कतिविधम्। तानि च कानि।
४. लौकिकं छन्दः कतिविधम्। तानि च कानि
५. पद्यस्य लक्षणं किम् अस्ति।
६. पद्यं कतिविधम्। तानि च कानि।

## २३.४) वृत्तस्य प्रकाराः

वृत्तम् त्रिविधम् अस्ति। यथा - १) समवृत्तम्, २) अर्धसमवृत्तम्, ३) विषमवृत्तम्। तथाहि छन्दोमञ्जर्यां प्रोक्तम्- "सममर्धसमं वृत्तं विषमञ्चेति तत् त्रिधा॥" इति। एवञ्च वृत्तरत्नाकरे अपि वृत्तभेदकथनम् - "सममर्धसमं वृत्तं विषमं च तथापरम्॥" इति।



## २३.४.१) समवृत्तम्

यस्य वृत्तस्य पादचतुष्टये गुरुलघुक्रमेण समानसंख्यकम् अक्षरं विद्यते, तत् समवृत्तम्। तथाहि प्रोक्तं छन्दोमञ्जर्याम् - "समं समचतुष्टयम्"इति। अर्थात् चतुर्षु पादेषु समानसंख्यकानि अक्षराणि विद्यन्ते। तथाहि वृत्तरत्नाकरे प्रोक्तम्-

**"अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः।**
**तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते॥"इति।**

अङ्घ्रयः नाम पादाः। यस्य वृत्तस्य चत्वारः अपि पादाः समानेन लक्षणेन युक्ताः भवन्ति। अर्थात् यस्मिन् वृत्ते चत्वारः एव पादाः समानाक्षरसंख्याविशिष्टाः भवन्ति, तत् समवृत्तम् इति उच्यते। यथा- इन्द्रवज्रा, शालिनी, मालिनी, रथोद्धता, वंशस्थविलः इत्यादीनि। एकम् उदाहरणं भवति-

**"इदं किलाव्याजमनोहरं वपुः**
**तपःक्षमं साधयितुं य इच्छति।**
**ध्रुवं स नीलोत्पलपत्रधारया**
**शमीलतां छेत्तुमृषिर्व्यवस्यति॥"इति।**

चतुर्षु पादेषु १२ अक्षराणि सन्ति। अत एव समवृत्तस्य उदाहरणम् एतत् अस्ति।

## २३.४.२) अर्धसमवृत्तम्

यस्य वृत्तस्य प्रथमः पादः तृतीयपादतुल्य एवं चतुर्थः पादः द्वितीयपादतुल्यः भवति। तत् अर्धसमं नाम वृत्तम्। तदुक्तं केदारभट्टेन वृत्तरत्नाकरे -

**"प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्।**
**द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते॥" इति।**

छन्दोमञ्जर्यां प्रोक्तम्- " आदिस्तृतीयवद् यस्य पादस्तुर्यो द्वितीयवत्। "इति।

तथाहि यस्य वृत्तस्य आदिः प्रथमः पादः तृतीयवत् तृतीयपादतुल्य एवं तुर्यः चतुर्थः पादो द्वितीयवद् द्वितीयपादतुल्यस्तत् हि अर्धसमं नाम वृत्तम्। तथा च अर्धं समं यस्य तद् अर्धसमम् इत्यन्वर्थसंज्ञा भवति। यथा - पुष्पिताग्रा, सुन्दरी, मालभारिणी इत्यादीनि। अर्धवृत्तस्य उदाहरणम् -

**"क्व वयं क्व परोक्षमन्मथः**
**मृगशावैः सममेधितो जनः।**
**परिहासविजल्पितं सखे**
**परमार्थेन न गृह्यतां वचः॥"इति।**

अत्र प्रथमपादे दश अक्षराणि सन्ति। तथैव तृतीयपादे अपि दश अक्षराणि सन्ति। अत एव प्रथमपादः तृतीयपादतुल्यः अस्ति। एवञ्च द्वितीयपादे एकादश अक्षराणि सन्ति। तथैव चतुर्थपादे अपि एकादश अक्षराणि सन्ति। अत एव द्वितीयपादः चतुर्थपादतुल्यः भवति। अत एव श्लोकः अयम् अर्धवृत्तस्य उदाहरणम् अस्ति।



## २३.४.३) विषमवृत्तम्

यस्य वृत्तस्य चतुर्षु पादेषु प्रति पादं भिन्नसंख्यायुक्तं भवति, तत् विषमवृत्तम्। अर्थात् प्रत्येकं पादे भिन्नसंख्याविशिष्टम् अक्षरम् अस्ति। तथाहि छन्दोमञ्जर्यां प्रोक्तम् - " भिन्नचिह्नचतुष्पादं विषमं परिकीर्तितम्। "इति। विषमवृत्तस्य लक्षणं कथयति वृत्तरत्नाकरे केदारभट्टः -

**"यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्।**
**तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः॥" इति।**

यस्य छन्दसः चतुर्षु अपि पादेषु परस्परं भिन्नसंख्याविशिष्टानि अक्षराणि विद्यन्ते, तत् विषमवृत्तम् इति छन्दःशास्त्राचार्याः प्रवदन्ति। यथा - उद्‌गता, सौरभकः इत्यादीनि। विषमवृत्तस्य उदाहरणम् एकम् उच्यते -

**"मृगलोचना शशिमुखी च**
**रुचिरदशना नितम्बिनी।**
**हंसललितगमना ललना**
**परिणीयते यदि भवेत् कुलोद्‌गता॥"इति।**

अत्र प्रथमपादे दश अक्षराणि सन्ति। द्वितीयपादे दश अक्षराणि सन्ति। तृतीयपादे एकादश अक्षराणि सन्ति। चतुर्थपादे त्रयोदश अक्षराणि सन्ति। प्रत्येकं पादे भिन्नसंख्यायुक्तानि अक्षराणि सन्ति। अत एव विषमवृत्तस्य उदाहरणम् एतत् अस्ति।

## २३.५) गणः

गण्-धातोः कर्तरि कर्मणि वाचि प्रत्यये गणशब्दः निष्पन्नः। गणः समूहः। किन्तु अत्र गणः नाम पद्यपादघटकाक्षरत्रयसमुदायः। छन्दःशास्त्रे प्रायः अष्टौ गणाः विराजन्ते। तथाहि छन्दोमञ्जर्यां प्रोक्तम्

**"म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।**
**समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना॥" इति।**

मगणः, यगणः, रगणः, सगणः, तगणः, जगणः, भगणः, नगणः, इति एते अष्टौ गणाः विद्यन्ते। तथा च ग इत्यनेन गुरुः, ल इत्यनेन लघुः स्वीक्रियते। एतैः एव समस्तं छन्दःशास्त्रं परिव्याप्तम् अस्ति। यथा - भगवता विष्णुना समस्तं जगत् परिव्याप्तं भवति तद्वत्। संस्कृतजगति छन्दसः ज्ञानलाभाय सर्वापेक्षया प्रयोजनीयम् उपकरणं गणः भवति। पादस्य गुरुलघुक्रमेण अक्षरत्रयं गणः भवति। छन्दोमञ्जर्यां गणलक्षणानि क्रमेण प्रोच्यन्ते आचार्यैः -

**"मस्त्रिगुरुस्त्रिलघुश्च नकारो,**
**भादिगुरुः पुनरादिलघुर्यः।**
**जो गुरुमध्यगतो रलमध्यः**
**सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥" इति।**
**"गुरुरेको गकारस्तु लकारो लघुरेककः"। इति**

वृत्तरत्नाकरे केदारभट्टेन गणलक्षणानि प्रोच्यन्ते -

**"सर्वगुर्मो मुखान्तर्लौ यरावन्तगलौ सतौ।**
**ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः॥" इति।**

मगणः त्रिगुरुः। यस्मिन् गणे सर्वाणि अक्षराणि गुरुसंज्ञकानि भवन्ति, स गणः मगणः भवति। तदुदाहरणं वागर्थाः इति। अस्मिन् गणे त्रीणि अक्षराणि गुरुसंज्ञकानि सन्ति। संयोगात् पूर्वम् अक्षरं गुरुसंज्ञकं भवति। अत एव रकारथकारयोः संयोगात् पूर्ववर्णः गकारः अस्ति। अत एव गकारोऽपि गुरुसंज्ञको भवति। ततः परं कथयति "त्रिलघुश्च नकारः" इति। यस्मिन् गणे त्रीणि अक्षराणि लघुसंज्ञकानि भवन्ति, स नगणः भवति। यथा रचय इति। अत्र त्रीणि अक्षराणि लघुसंज्ञकानि भवन्ति। अत एव नगणस्य उदाहरणम् इदम्। भगणस्य लक्षणं तु "भादिगुरुः"इति। अर्थात् यस्मिन् गणे आदि अक्षरं गुरुसंज्ञकं भवति। अवशिष्टं अक्षरद्वयं लघुसंज्ञकं भवति। यथा - श्रीमति इति। अत्र केवलं प्रथमाक्षरं गुरुसंज्ञकं भवति। म, ति इति अक्षरद्वयं लघुसंज्ञकं भवति। अत एव भगणस्य उदाहरणम् इदम् अस्ति। यगणस्य लक्षणं तु "आदिलघुः यः"इति। अर्थात् यस्मिन् गणे केवलं प्रथमाक्षरं लघुसंज्ञकं भवति। अवशिष्टञ्च अक्षरद्वयं गुरुसंज्ञकं भवति। स गणः यगणः इत्युच्यते। यथा - मनीषा इति। अत्र म इति केवलं लघु अक्षरं विद्यते। अवशिष्टं नी, षा इति अक्षरद्वयं गुरुसंज्ञकं भवति। अत एव यगणस्य उदाहरणम् इदम् अस्ति। जगणस्य लक्षणं तु " जो गुरुमध्यगतः"इति। अर्थात् जगणे केवलं मध्यमम् अक्षरं गुरुसंज्ञकं भवति। अवशिष्टं लघुसंज्ञकं भवति। अर्थात् प्रथमम् अक्षरं लघुसंज्ञकं भवति। अन्तिमम् अक्षरम् अपि लघुसंज्ञकं भवति। यथा - मधूनि इति। अत्र केवलं मध्यमम् अक्षरं धू इति गुरुसंज्ञकं भवति। अपरञ्च प्रथमम् अक्षरं म इति, अन्तिमम् अक्षरं नि इति लघुसंज्ञकं भवति। अत एव जगणस्य उदाहरणम् इदम् अस्ति। ततः रगणस्य लक्षणं प्रोक्तम्- "र लमध्यः"इति। अर्थात् यस्मिन् गणे मध्यमम् अक्षरं लघुसंज्ञकं भवति चेत् स रगणः इत्युच्यते। अवशिष्टं लघुसंज्ञकं अक्षरम् अस्ति। अर्थात् प्रथमम् अक्षरम् अन्तिमम् अक्षरं च गुरुसंज्ञकं भवति। यथा - कौमुदी इति। अत्र मु इति मध्यमम् अक्षरं केवलं लघुसंज्ञकं विद्यते। अपरं कौ, दी इति अक्षरद्वयं गुरुसंज्ञकं भवति। अत एव रगणस्य उदाहरणम् इदम् अस्ति। सगणस्य लक्षणं तु " सोऽन्तगुरुः"इति। अर्थात् यस्मिन् गणे केवलम् अन्तिमम् अक्षरं गुरुसंज्ञकं भवति चेत् स सगणः इत्युच्यते। अवशिष्टं अक्षरञ्च लघुसंज्ञकं भवति। अर्थात् प्रथमम् अक्षरं मध्यमम् अक्षरञ्च लघुसंज्ञकम् अस्ति। यथा - कमला इति। प्रकृते अन्तिमम् अक्षरं ला इति गुरुसंज्ञकम् अस्ति। क, म इति प्रथमम् अक्षरम् मध्यमम् अक्षरञ्च लघुसंज्ञकम् अस्ति। अत एव सगणस्य उदाहरणम् इदं विद्यते। ततः तगणस्य लक्षणं प्राह " अन्तलघुस्तः "इति। अर्थात् यस्मिन् गणे केवलम् अन्तिमम् अक्षरं लघुसंज्ञकम् अस्ति चेत् स तगणः इत्युच्यते। अवशिष्टम् अक्षरं गुरुसंज्ञकं विद्यते। अर्थात् प्रथमम् अक्षरं मध्यमम् अक्षरञ्च गुरुसंज्ञकं विद्यते। यथा - सर्वाणि इति। अत्र णि इति अन्तिमम् अक्षरं लघुसंज्ञकं विद्यते। अवशिष्टं स, र्वा इति गुरुसंज्ञकं विद्यते। यतो हि संयोगात् पूर्ववर्णः गुरुसंज्ञको भवति। र्वा इति संयोगात् पूर्वं सकारः गुरुसंज्ञको विद्यते। अत एव तगणस्य उदाहरणं विद्यते। अक्षरत्रयम् आधारीकृत्य अष्टौ गणाः भवन्ति। गकारः इत्युक्ते" गुरुरेको गकारस्तु"इति। गकारः इत्युक्ते केवलम् एकम् एव अक्षरम् अस्ति, तच्च अक्षरं गुरुसंज्ञकं भवति। यथा - सा इति। प्रकृते सा इति एकम् एव अक्षरं विद्यते। तच्च गुरुसंज्ञकं विद्यते। अपरस्तु लवर्णः विद्यते। लकारः इत्युक्ते " लकारो लघुरेककः"इति। लकारः इत्युक्ते एकम् एव अक्षरं

विद्यते, तच्च अक्षरं लघुसंज्ञकं भवति। यथा- नु इति। अत्र केवलम् एकम् एव अक्षरं विद्यते। तच्च अक्षरं लघुसंज्ञकं विद्यते। अत्र अक्षरम् इत्युक्ते स्वरः स्वराश्रितः व्यञ्जनः वा।

## पाठगतप्रश्नाः-२

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते -

७. वृत्तं कतिविधम्। तानि च कानि।

८. समवृत्तस्य लक्षणं लिखन्तु।

९. अर्धसमवृत्तस्य लक्षणं लिखन्तु।

१०. विषमवृत्तस्य लक्षणं लिखन्तु।

११. गणाः कतिविधाः सन्ति। तानि च कानि।

१२. मगणस्य लक्षणं लिखन्तु।

१३. यगणस्य लक्षणं लिखन्तु।

१४. रगणस्य लक्षणं लिखन्तु।

१५. सगणस्य लक्षणं लिखन्तु।

१६. तगणस्य लक्षणं लिखन्तु।

## २३.६) अक्षराणां चिह्नानि

प्राच्यपण्डितप्रवराः गुरुवर्णानां कृते (ऽ) इति चिह्नं प्रयुज्यन्ते, लघुवर्णानां कृते च (। ) इति चिह्नं प्रयुज्यन्ते। किन्तु पाश्चात्यपण्डितप्रवराः अन्यथा चिह्नं व्यवहरन्ति। पाश्चात्यपण्डिताः गुरुवर्णानां कृते (–) इति चिह्नं प्रयुज्यन्ते, लघुवर्णानां कृते च (U) इति चिह्नं प्रयुज्यन्ते।

छात्राणां बोधसौकर्याय स्मरणसौबिध्याय च काचित् तालिका प्रदीयते।

| गणस्य नामानि | लक्षणानि | चिह्नानि | उदाहरणानि |
|---|---|---|---|
| मगणः | त्रिगुरुः | ऽऽऽ | श्रीदुर्गा |
| नगणः | त्रिलघुः | ।।। | रचय |
| भगणः | आदिगुरुः | ऽ।। | श्रीमति |
| यगणः | आदिलघुः | । ऽऽ | मनीषा |
| जगणः | गुरुमध्यगतः | । ऽ। | मधूनि |
| रगणः | लमध्यः | ऽ। ऽ | कौमुदी |

| | | | |
|---|---|---|---|
| सगणः | अन्तगुरुः | ।। ऽ | कमला |
| तगणः | अन्तलघुः | ऽऽ। | सर्वाणि |

## २३.७) मात्रिकच्छन्दसः उपयोगिनः गणाः

मात्रिकच्छन्दसः कृते उपयोगिनः गणाः आलोच्यन्ते। तच्च कारिकामाध्यमेन कथयति -

**ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः।**
**गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः॥**

आर्यादिमात्राच्छन्दसि चतुर्मात्रिकाः पञ्च गणाः विद्यन्ते। अर्थात् मात्रिकच्छन्दसि पञ्च गणाः विद्यन्ते। प्रत्येकं गणे प्रायः चत्वारः मात्राः विलसन्ति। ते च सर्वगुरुः, अन्तगुरुः, मध्यगुरुः, आदिगुरुः, सर्वलघुः इति। सर्वगुरुः इत्युक्ते सर्वे एव वर्णाः गुरुसंज्ञकाः भवन्ति। यथा- दुर्गा इति। अत्र दु, र्गा इति द्वयोः एव गुरुसंज्ञा विद्यते।

अन्तगुरुः इत्युक्ते केवलम् अन्तिमम् अक्षरं गुरुसंज्ञकं भवति। अवशिष्टं तु लघुसंज्ञकं भवति। यथा- रमणी इति। अत्र णी इति अन्तिमम् अक्षरम् एव गुरुसंज्ञकं विद्यते। अवशिष्टं र, म इति तु लघुसंज्ञकं विद्यते। मध्यगुरुः इत्युक्ते केवलं मध्यमम् अक्षरं गुरुसंज्ञकं भवति। अवशिष्टं तु लघुसंज्ञकं भवति। यथा - शिवाय इति। अत्र मध्यमम् अक्षरं वा इति गुरुसंज्ञकं भवति। अवशिष्टं शि, य इति तु लघुसंज्ञकं विद्यते। आदिगुरुः इत्युक्ते केवलम् आदि अक्षरम् एव गुरुसंज्ञकं भवति। अवशिष्टं तु लघुसंज्ञकं भवति। यथा - शङ्कर इति। अत्र तु केवलम् आदि अक्षरं श इति गुरुसंज्ञकं भवति। यतो हि ङ्क इति संयोगात् पूर्ववर्णः शकारः विद्यते। अवशिष्टं ङ्क, र इति तु लघुसंज्ञकं विद्यते। सर्वलघुः इत्युक्ते सर्वाणि अपि अक्षराणि लघुसंज्ञकानि भवन्ति। यथा - रचयति इति। अत्र सर्वाणि अपि अक्षराणि लघुसंज्ञकानि भवन्ति। अत्र एतद् अवधेयम् अस्ति यत् मात्रिकच्छन्दसि चतुर्मात्रिकः गणः भवति। तस्मात् प्रकृतगणे मात्राः चत्वारः इति तु अनिवार्यम्।

वामकरतलेन एकवारं जानुमण्डलं परिक्रमणाय य समयः अपेक्षते, स मात्रापदवाच्यः भवति इति कविभिः प्रोक्तम्। तथाहि प्रोक्तम् -

**"वामजानुनि तद्धस्तभ्रमणं यावता भवेत्।**
**कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः॥"इति**

मात्रा त्रिविधा भवति। ताश्च ह्रस्वः, दीर्घः, प्लुतः इति। यस्य उच्चारणाय एकमात्रिकः कालः अपेक्षते, स ह्रस्वः। यस्य उच्चारणाय द्विमात्रिकः कालः अपेक्षते, स दीर्घः भवति। यस्य उच्चारणाय त्रिमात्रिकः कालः अपेक्षते, स प्लुतः। व्यञ्जनवर्णस्य उच्चारणाय अर्धमात्रिककालः अपेक्षते। तथाहि प्रोक्तम्-

**एकमात्रो भवेद् ह्रस्वः, द्विमात्रो दीर्घ उच्यते।**
**त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम्॥**

अर्थात् लघुवर्णस्य एकमात्रा, गुरुवर्णस्य द्विमात्रा, प्लुतवर्णस्य त्रिमात्रा, व्यञ्जनवर्णस्य अर्धमात्रा भवति।

छात्राणां बोधसौकर्याय मात्रिकच्छन्दसां काचित् तालिका प्रस्तूयते -

| गणः | चिह्नानि | उदाहरणानि | मात्राः |
|---|---|---|---|
| सर्वगुरुः | ऽऽ | दुर्गा | चत्वारः |
| अन्तगुरुः | ।। ऽ | कमला | चत्वारः |
| मध्यगुरुः | । ऽ। | शिवाय | चत्वारः |
| आदिगुरुः | ऽ।। | शङ्कर | चत्वारः |
| सर्वलघुः | ।।।। | रचयति | चत्वारः |

## २३.७.१) गुरुस्वरस्य वर्णनम्

छन्दसः प्राणभूताः गणाः तु निरूपिताः सन्ति। सम्प्रति शङ्का मनसि उदेति - गुरुवर्णः कः भवति, लघुवर्णश्च कः भवति इति। अस्य समाधानाय छन्दोमञ्जर्यां काचित् कारिका रचिता -

**"सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।**
**वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा॥" इति।**

उक्तञ्च वृत्तरत्नाकरे केदारभट्टपादैः -

**"सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।**
**वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः"॥इति।**

अनुस्वारेण युक्तः सानुस्वारः स्वरः ग इति संज्ञकः, गुरुरित्यर्थः। यथा - ग्रामं गच्छति इत्यत्र मकारोत्तरवर्तिनः अकारात् परम् अनुस्वारो वर्तते। अतोऽनुस्वारयुक्तत्वात् सः अकारः गुरुताम् आपद्यते। तत्र अनुस्वार इति उपलक्षणम्, तेन अवसाने व्यञ्जनसत्त्वेऽपि लघुः गुरुः भवेत्। एवं विसर्गः अन्ते यस्य वर्तते स विसर्गान्तः स्वरो गुरुर्भवति। यथा, रामः इत्यत्र मकारोत्तरवर्ती योऽकारः अस्ति। स गुरुतां भजते यतः तदन्ते विसर्गः वर्तते। एवं युक्तो वर्णः परो यस्मात् तादृशः युक्तपरः स्वरो गुरुः भवति। अज्भिः अव्यवहिताः हलः संयोगसंज्ञां लभन्ते। तादृशसंयोगवान् वर्ण एव युक्तवर्णः। तथाहि रक्त इत्यत्र रकारोत्तरवर्ती योऽकारः स गुरुः। यतः तदुत्तरं वर्तते क्तेति संयोगः। श्लोके अपिशब्देन पादान्तस्थितः गुरुः अपि वर्णो विकल्पेन गुरुः भवेत्। अत्र वाशब्दस्य व्यवस्थावाचित्वाद् वृत्तेषु लघुवर्णः विकल्पेन गुरुः भवेत्, जातिषु तु लघुः गुरुश्च वर्णो विकल्पेन गुरुः भवेत् इति बोद्धव्यम्। पादस्य अन्ते लघुवर्णः वा विक्लपेन गुरुः भवति। यथा - “उपेन्द्रव्रजादपि दारुणोऽसि”इत्यत्र इदम् एकादशाक्षरात्मकस्य उपेन्द्रवज्रनाम्नः छन्दसः चरणम्। अस्य अन्ते "उपेन्द्रवज्रा जतजास्ततो गौ”इति वक्ष्यमाणलक्षणात् गुरुः

अपेक्षितः। परन्तु सि इति एकमात्रिकत्वात् लघुः इति छन्दोभङ्गस्य सम्भावना दृश्यते। तदा तु पादान्तस्थित्वात् लघोरपि विकल्पेन गुरुत्वं सम्भवम् अस्ति।

छन्दःशास्त्रे क्वचित् लघुत्वापेक्षायां गुरुरपि स्वरः लघुताम् आप्नोति। तत्र उदाहरणं तु -

**"तरुणं सर्षपशाकं नवोदनं पिच्छिलानि च दधीनि।**

अल्पव्ययेन सुन्दरि! ग्राम्यजनो मिष्टमश्नाति।। " इति। अत्र आर्या नाम वृत्तम्। अस्य लक्षणं तु प्रथमपादे द्वादशमात्राः, द्वितीयपादे अष्टादशमात्राः, तृतीयपादे पुनः द्वादशमात्राः, चतुर्थपादे पञ्चदशमात्राः इति। प्रस्तुतश्लोके द्वितीयपादचतुर्थपादयोः अन्तिमवर्णयोः लघोरपि गुरुत्वम् अत्यन्तम् आवश्यकम्। एवं तृतीये पादे सुन्दरि इति इकारस्य ग्राम्य इति संयुक्ताग्रवर्णात् पूर्ववर्तित्वेन गुरुत्वं सम्भवति। तेन तृतीयपादे त्रयोदशमात्राः भवन्ति। एतेन छन्दोभङ्गः भविष्यति।। अत एव काचित् कारिका प्रदीयते -

**"पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः।**
**पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद् गुरोः"॥इति।**

इति नियमाद् ग्रेति क्रमसंयोगपूर्वत्वात् गुरुरपि सुन्दरि इति इकारो व्यवस्थितविकल्पेन लघुतया परिणतो भवति। तेन पादान्तगुरोः लघुत्वेन स्वीकारो भवति। तेन एकमात्राह्रासात् तृतीयपादे द्वादशमात्रा एव ज्ञातव्याः, अतो न छन्दोभङ्गः।

'प्रह्रे वा' इति एतद् एकं विकल्पविधायकं सूत्रम्। अनेन प्र,ह्रे च इत्यनयोः शब्दयोः पूर्ववर्णस्य विकल्पेन ह्रस्वत्वं विधीयते। यथा -

**"सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्यङ्गमनोपवस्त्रा।**
**निर्वृत्तपर्ज्जन्यजलपाभिषेका प्रफुल्लकाशा वसुधेव रेजे॥"इति।**

अत्र प्रवर्णस्य संयोगघटितत्वात् तस्मात् पूर्ववर्तिनः वर्णस्य तकारस्य गुरुत्वं भवति। परन्तु प्रकृतशास्त्रेण विकल्पेन लघुत्वं प्रतिपाद्यते इति शम्।

ह्रशब्दे परे गुरोः अपि लघुत्वं सम्भवति। तस्य उदाहरणं तावत्

**“प्राप्य नाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय।**
**औपनिविकमरून्ध किल स्त्री बल्लभस्य करमात्मकराभ्याम्॥”इति।**

अत्र ह्रवर्णस्य संयोगघटितत्वात् तस्मात् पूर्ववर्तिनः वर्णस्य भि इत्यस्य गुरुत्वं भवेत्। परन्तु प्रकृतशास्त्रेण विकल्पेन लघुत्वं प्रतिपाद्यते। तेन भि इत्यस्य लघुसंज्ञा एव भवति।

## २३.७.२) यतिः

यम्धातोः भावे क्तिन्प्रत्यये यतिशब्दः निष्पद्यते। यतिः नाम विरामः। छन्दःशास्त्रे तु यतिशब्दः अयं यम्यते विश्राम्यते जिह्वा यत्र इति अधिकरणवाच्ये क्तिन्प्रत्ययस्य योगेन निष्पन्नः भवति। अतः जिह्वाविश्रामस्थानार्थे यतिशब्दः पारिभाषिकः भवति। तदुक्तं गङ्गादासकविराजेन -

**"यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते।**
**सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया।। " इति।**



अर्थात् पद्यस्य उच्चारणसमये जिह्वा स्वत एव यत्र विश्रान्तिं लब्धुम् इच्छति तत्रैव यतिः भवति। विच्छेदः विरामः इत्यादिभिः पदैः यतिः बोध्यते। सा इयं यतिः पादमध्यगा पादान्ता चेति भेदात् द्विविधा। पादः नाम पद्यचरणम्। चतुष्पदात्मकस्य पद्यस्य प्रतिपादस्य अवसाने स्वभावत एव या यतिः भवति सा हि पादान्ता। तस्य उदाहरणं यथा 'न तज्जलं यन्न सुचारुपङ्कजं / न पङ्कजं तद् यदलीनषट्पदम्।। ' इति।

इति वंशस्थविलछन्दोबद्धपद्यस्य सुचारुपङ्कजम् इति प्रथमपादस्य अवसाने तथा षट्पदम् इति द्वितीयपादस्य अवसाने च पादान्ता यतिः विद्यते। किन्तु यत्र पद्यस्य पादमध्ये निर्दिष्टाक्षरानन्तरं यतिः भवति सा यतिः हि पादमध्यगा यतिः भवति। तथाहि 'सरसिजमनुविद्धं शैवलेनापि रम्यम्' इति मालिनीछन्दोबद्धपद्यपादे यथा रम्यम् इति पादस्य अवसाने पादान्ता यतिः वर्तते, तद्वत् प्रथमतः अष्टमात् अक्षरात् अनन्तरम् अनुविद्धम् इत्यत्र एका यतिः वर्तते, 'ननमययययुतेयं मालिनी भगिलोकैः' इति निर्देशात्। अतः अनुविद्धम् इत्यत्र तु पादमध्यगा यतिः विद्यते। अत्र इदम् उल्लेख्यं यत् यस्मिन् अक्षरे यतिः निर्दिष्टा तदक्षरं पदस्य अन्तिमं भवेत्। यदि पदमध्ये यतिः भवति तर्हि सा यतिः श्रोतकार्कश्यात् रमणीयतां प्रजहाति। किन्तु स्वरसन्धेः पूर्वस्था पदमध्यस्था यतिस्तु न अरम्या। तथाहि 'कृष्णःपुष्णात्वतुलमहिमा मां करुणया' इत्यत्र पुष्णेत्यत्र यतिः पदमध्यगा। किन्तु 'त्वतुले'ति स्वरसन्धिना सा पदमध्यगा यतिः रमणीया एव संवृत्ता। वृत्तरत्नाकरे केदारभट्टेन यतिविषये एका कारिका प्रोक्ता - “यतिर्विच्छेदसंज्ञिका”इति। अर्थात् विच्छेदस्य यतिसंज्ञा भवति।

## पाठगतप्रश्नाः-४

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते -

१७. गुरुवर्णः कः भवति।

१८. यतिः कतिविधा भवति।

१९. यतेः के प्रभेदाः सन्ति।

२०. यतिलक्षणं किम् अस्ति।

---

## २३.८) दण्डकः

वृत्तरत्नाकरे दण्डकस्य लक्षणं प्रोक्तं - “यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः”इति। यत्र नगणद्वयं तदनन्तरं सप्तरगणाः विद्यन्ते, स चण्डवृष्टिप्रपातः नाम दण्डक भवति। “तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः”इति। अनेन श्लोकेन षड्विंशत्यधिकस्य अक्षरपादस्य छन्दसः संज्ञां कथितवान्। तदूर्ध्वम् - तस्मात् षड्विंशत्यक्षरपादात् छन्दसः, ऊर्ध्वम् - उपरि, सप्तविंशत्याद्यक्षरपादानि छन्दांसि, चण्डवृष्ट्यादिचण्डिकाः - चण्डवृष्ट्यादिविशेषनामानः, दण्डकसामान्यनामानः, परिकीर्तिताः - कथिताः सन्ति। अर्थात् षड्विंशत्यधिकस्य अक्षरपादस्य छन्दसः दण्डकः इति संज्ञा भवति। दण्डकशब्दस्य अर्थस्तु दण्डप्रदानम्। अस्मिन् छन्दसि अपि दीर्घाः पादाः

भवन्ति। एतादृशस्य पादस्य उच्चारणाय कष्टं जायते। तदेव कष्टं दण्डः अस्ति। दण्डकस्य अस्य चण्डवृष्टि इति विशेषभेदाः विद्यन्ते।

## २३.९) गाथालक्षणम्

वृत्तरत्नाकरे केदारभट्टेन श्लोकाकारेण गाथालक्षणं प्रतिपादितम् –

**विषमाक्षरपादं वा पादैरसमं दशधर्मवत्।**
**यच्छन्दो नोक्तमत्र गाथेति तत् सूरिभिः प्रोक्तम्।।**

"शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः॥"इति। अनेन श्लोकेन विशेषलक्षणेन अलक्षितानां प्रयुज्यमानानां छन्दसां सामान्यसंज्ञा गाथा इति विदधाति। शेषः नाम उक्तादन्यः। अत्रापि चण्डवृष्ट्यादिविशेषात् भिन्नम् इत्यर्थः। त्रिभिः षड्भिः वा पादैः संलक्षिताः गाथाः भवन्ति। यस्मिन् छन्दसि चतुर्भिन्नसंख्यकाः पादाः सन्ति। यस्मिन् छन्दसि गुरुलघुक्रमः अपि भिन्नः विद्यते। यस्मिन् छन्दसि प्रति चरणेषु अक्षरसंख्या भिन्ना भवति। तादृशस्य छन्दसः गाथा इति साधारणसंज्ञा भवति। गाथायाः उदाहरणम्-

**"यथा यथा वादयति प्रियस्तथा तथा नृत्यामि चञ्चले प्रेम्णि।**
**वल्ली वलयत्यङ्गं स्वभावस्तब्धेऽपि वृक्षे॥"इति।**

अस्मिन् श्लोके तु त्रयः पादाः सन्ति। अत एव अस्य छन्दसः गाथा इति संज्ञा प्रदीयते।

## २३.१०) छन्दसां सामान्यसंज्ञा

अत्र अक्षराणां ह्रासवृद्ध्यनुसारेण समवृत्तछन्दसः नामानि निर्दिश्यन्ते। एकाक्षरात् आरभ्य एकेन एकेन अक्षरेण वर्धितैः पादैः भिन्नं भिन्नं छन्दो भवेत्। एकस्मिन् पादे एकम् एव अक्षरं भवति चेत् अपि तत् छन्दो भवति। ततः एकम् अक्षरम् आरभ्य प्रति एकस्य एकस्य च अक्षरं योजयित्वा अन्यानि छन्दांसि निर्मीयन्ते। तदेव श्लोकाकारेण केदारभट्टेन वृत्तरत्नाकरे प्रोक्तम् -

**"आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्धितैः।**
**पृथक् छन्दो भवेत् पादैर्यावत् षड्विंशतिं गतम्॥"इति।**

अर्थात् एकाक्षरात् पादात् आरभ्य एकेन एकेन अक्षरेण वर्धितैः पादैः भिन्नं भिन्नं छन्दो भविष्यति। इयं वृद्धिः कियती भवति इति जिज्ञासा जायते। अत्र समाधानं प्रदीयते यत् षड्विंशतिसंख्याकं पादं पर्यन्तं वृद्धिः सम्भवति। अर्थात् समवर्णवृत्तेषु एकेन अक्षरेण पादम् एकं कृत्वा चतुर्षु पादेषु जातेषु छन्द एकं भवति। एकेन वर्धिताभ्यां द्वाभ्यां वर्णाभ्यां चतुर्णां पादानां निर्माणे अपि पृथक् छन्दो भवति। एवम् एकैकवर्धनेन षड्विंशतिपर्यन्तं पृथक् पृथक् छन्दांसि संभवन्ति। एतेषां पृथक् पृथक् संज्ञाः संभवन्ति। पूर्वप्रतिपादितानाम् एकाक्षरात् पादात् आरभ्य षड्विंशत्यक्षरपादावधिकानां छन्दसां पृथक् पृथक् उक्तादिसामान्यसंज्ञाः भवन्ति। श्लोकाकारेण वृत्तरत्नाकरे केदारभट्टेन प्रकथितम् -

**"उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका।**

**गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च॥**
**त्रिष्टुप् च जगती चैव तथाऽतिजगती मता।**
**शक्वरी साऽतिपूर्वा स्यात् अष्ट्यत्यष्टी ततः स्मृते॥**
**धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः।**
**विकृतिः सङ्कृतिश्चैव तथाऽतिकृतिरुत्कृतिः॥"इति।**

अर्थात् एकाक्षरस्य छन्दसः नाम उक्ता इति। द्व्यक्षरस्य छन्दसः नाम अत्युक्ता इति। त्र्यक्षरस्य छन्दसः नाम मध्या इति। चतुरक्षरस्य छन्दसः नाम प्रतिष्ठा इति। पञ्चाक्षरस्य छन्दसः नाम सुप्रतिष्ठा इति। षडक्षरस्य छन्दसः नाम गायत्री इति।

सप्ताक्षरस्य छन्दसः नाम उष्णिक् इति। अष्टाक्षरस्य छन्दसः नाम अनुष्टुप् इति। नवाक्षरस्य छन्दसः नाम बृहती इति। दशाक्षरस्य छन्दसः नाम पङ्क्तिः इति। एकादशाक्षरस्य छन्दसः नाम त्रिष्टुप् इति। द्वादशाक्षरस्य छन्दसः नाम जगती इति। त्रयोदशाक्षरस्य छन्दसः नाम अतिजगती इति। चतुर्दशाक्षरस्य छन्दसः नाम शक्वरी इति। पञ्चदशाक्षरस्य छन्दसः नाम अतिशक्वरी इति। षोडशाक्षरस्य छन्दसः नाम अष्टिः इति। सप्तदशाक्षरस्य छन्दसः नाम अत्यष्टिः इति। अष्टादशाक्षरस्य छन्दसः नाम धृतिः इति। उनविंशत्यक्षरस्य छन्दसः नाम अतिधृतिः इति। विंशत्यक्षरस्य छन्दसः नाम कृतिः इति। एकविंशत्यक्षरस्य छन्दसः नाम प्रकृतिः इति। द्वाविंशत्यक्षरस्य छन्दसः नाम आकृतिः इति। त्रयोविंशत्यक्षरस्य छन्दसः नाम विकृतिः इति। चतुर्विंशत्यक्षरस्य छन्दसः नाम संस्कृतिः इति। पञ्चविंशत्यक्षरस्य छन्दसः नाम अतिकृतिः इति। षड्विंशत्यक्षरस्य छन्दसः नाम उत्कृतिः इति। एकस्मिन् पादे एतावत्यः संख्याः भवितुम् अर्हन्ति।

छात्राणां बोधसौकर्याय काचित् तालिका प्रस्तूयते -

| छन्दसः नामानि | पादगताक्षरसंख्या | श्लोकगताक्षरसंख्या |
|---|---|---|
| उक्ता | एकम् | चत्वारि |
| अत्युक्ता | द्वे | अष्टौ |
| मध्या | त्रीणि | द्वादश |
| प्रतिष्ठा | चत्वारि | षोडश |
| सुप्रतिष्ठा | पञ्च | विंशतिः |
| गायत्री | षड् | चतुर्विंशतिः |
| उष्णिक् | सप्त | अष्टाविंशतिः |
| अनुष्टुप् | अष्टौ | द्वात्रिंशत् |
| बृहती | नव | षड्त्रिंशत् |
| पङ्क्तिः | दश | चत्वारिंशत् |

| | | |
|---|---|---|
| त्रिष्टुप् | एकादश | चतुश्चत्वारिंशत् |
| जगती | द्वादश | अष्टचत्वारिंशत् |
| अतिजगती | त्रयोदश | द्विपञ्चाशत् |
| शक्वरी | चतुर्दश | षट्पञ्चाशत् |
| अतिशक्वरी | पञ्चदश | षष्टिः |
| अष्टिः | षोडश | चतुःषष्टिः |
| अत्यष्टिः | सप्तदश | अष्टषष्टिः |
| धृतिः | अष्टादश | द्विसप्ततिः |
| अतिधृतिः | नवदश | षट्सप्ततिः |
| कृतिः | विंशतिः | अशीतिः |
| प्रकृतिः | एकविंशतिः | चतुरशीतिः |
| आकृतिः | द्वाविंशतिः | अष्टाशीतिः |
| विकृतिः | त्रयोविंशतिः | द्विनवतिः |
| संस्कृतिः | चतुर्विंशतिः | षण्णवतिः |
| अतिकृतिः | पञ्चविंशतिः | शतम् |
| उत्कृतिः | षड्विंशतिः | चतुरधिकैकशतम् |

## पाठगतप्रश्नाः-५

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते -

२१. दण्डकस्य लक्षणं किम्।

२२. गाथायाः लक्षणं किम्।

२३. गायत्रीछन्दसि कति अक्षराणि विद्यन्ते।

२४. अनुष्टुप्-छन्दसि कति अक्षराणि विद्यन्ते।

२५. त्रिष्टुप्-छन्दसि कति अक्षराणि विद्यन्ते।

२६. जगतीछन्दसि कति अक्षराणि विद्यन्ते।

## पाठसारः

छादयति आच्छादयति वा इति छन्दः। वैयाकरणपाणिनेः मते तु अभिप्रायार्थबोधकात् आनन्दपर्यायभुक्तार्थात् वा छन्द्- धातोः छन्दः शब्दस्य उत्पत्तिः जाता। यत् पापम् आच्छादयति, तत् छन्दः। अथवा यत् पापात् यजमानस्य पुरोहितस्य च आच्छादनं करोति, तत् छन्दः। छन्दः वस्तुतस्तु लौकिकवैदिकभेदेन द्विविधं भवति। लौकिकच्छन्दस्तु पिङ्गलादीनाम् आचार्याणां मते मात्रावर्णविभेदेन द्विविधम्। तत्र अक्षरगणघटितं पद्यं वृत्तं, मात्रिकगणघटितं पद्यञ्च जातिः इत्युच्यते। वृत्तपद्यस्य उदाहरणानि भवन्ति वसन्ततिलकादयः। जातिच्छन्दस्य उदाहरणानि भवन्ति आर्यादयः इति। वृत्तम् त्रिविधम् अस्ति। यथा - १) समवृत्तम्, २) अर्धसमवृत्तम्, ३) विषमवृत्तम्। तथाहि छन्दोमञ्जर्यां प्रोक्तम्- "सममर्धसमं वृत्तं विषमञ्चेति तत् त्रिधा॥"इति। यस्य वृत्तस्य पादचतुष्टये गुरुलघुक्रमेण समानसंख्यकम् अक्षरं विद्यते, तत् समवृत्तम्। यथा - शालिनी, मालिनी इत्यादीनि। यस्य वृत्तस्य प्रथमः पादः तृतीयपादतुल्य एवं चतुर्थः पादः द्वितीयपादतुल्यः भवति। तत् अर्धसमं नाम वृत्तम्। यथा - पुष्पिताग्रा, सुन्दरी इत्यादीनि। यस्य वृत्तस्य चतुर्षु पादेषु प्रतिपादं भिन्नसंख्यायुक्तं भवति, तत् विषमवृत्तम्। यथा - उद्गाता, सौरभकः इत्यादीनि। प्रायः संस्कृतजगति दश गणाः विलसन्ति। यथा - मगणः, यगणः, रगणः, सगणः, तगणः, जगणः, भगणः, नगणः, इति एते अष्टौ गणाः विद्यन्ते। मात्रिकच्छन्दसि पञ्च गणाः विद्यन्ते। प्रत्येकं गणे प्रायः चतस्रः मात्राः विलसन्ति। ते च सर्वगुरुः, अन्तगुरुः, मध्यगुरुः, आदिगुरुः, सर्वलघुः च इति। सानुस्वारः दीर्घश्च विसर्गी च संयोगपूर्वश्च वर्णः गुरुः भवेत्। यतिः नाम विरामः। छन्दःशास्त्रे तु यतिशब्दः अयं यम्यते विश्राम्यते जिह्वा यत्र इति अधिकरणवाच्ये क्तिन्प्रत्ययस्य योगेन निष्पन्नः भवति। अतः जिह्वाविश्रामस्थानार्थे यतिशब्दः पारिभाषिकः भवति। पुनश्च षड्विंशत्यधिकस्य अक्षरपादस्य छन्दसः दण्डकः इति संज्ञा भवति। अत्र अक्षराणां ह्रासवृद्ध्यनुसारेण समवृत्तछन्दसः नामानि निर्दिश्यन्ते। एकाक्षरात् आरभ्य एकेन एकेन अक्षरेण वर्धितैः पादैः भिन्नं भिन्नं छन्दो भवेत्। एकस्मिन् पादे एकम् एव अक्षरं भवति चेत् अपि तत् छन्दो भवति। ततः एकम् अक्षरम् आरभ्य क्रमेण एकम् एकम् अक्षरं योजयित्वा अन्यानि छन्दांसि निर्मीयन्ते। तेषाम् उक्तादिसामान्यसंज्ञा अपि प्रदीयते।

## पाठान्तप्रश्नाः

अत्र केचित् पाठान्तप्रश्नाः प्रदीयन्ते

१. छन्दसः लक्षणं प्रतिपादयन्तु।

२. छन्दसः भेदान् प्रतिपादयन्तु।

३. पद्यस्य लक्षणं प्रतिपाद्य तद्भेदान् प्रतिपादयन्तु।

४. वृत्तस्य भेदान् प्रतिपादयन्तु।

५. समवृत्तविषये लघुप्रबन्धं लिखन्तु।

६. अर्धसमवृत्तविषये लघुप्रबन्धं लिखन्तु।

७. विषमवृत्तविषये लघुप्रबन्धं लिखन्तु।

८. गणस्य विषये लघुप्रबन्धं लिखत।

९. गणाः कतिविधाः सन्ति। तेषां विवरणं प्रददातु।

१०. मात्रिकच्छन्दांसि वर्णयत।

११. गुरुस्वरान् प्रतिपादयतु।

१२. यतिलक्षणं प्रतिपाद्यताम्।

१३. गाथालक्षणं विवेचयन्तु।

१४. दण्डकलक्षणं लिखन्तु।

१५. छन्दसां सामान्यसंज्ञा निरूप्यताम्।

## पाठगतप्रश्नानाम् उत्तराणि

अत्र पाठगतप्रश्नानाम् उत्तराणि प्रदीयन्ते -

१. छादयति आच्छादयति वा इति छन्दः।

२. पादौ।

३. द्विविधम्। लौकिकम्, वैदिकञ्चेति।

४. द्विविधम्। मात्रिकच्छन्दः, वार्णिकच्छन्दः।

५. पद्यं चतुष्पदी।

६. द्विविधम्। वृत्तपद्यम्, जातिपद्यञ्चेति।

७. वृत्तम् त्रिविधम् अस्ति। यथा - १) समवृत्तम्, २) अर्धसमवृत्तम्, ३) विषमवृत्तम्।

८. "अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते॥"इति।

९. "प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्।
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते॥" इति।

१०. "यस्य पादचतुष्केऽपि लक्ष्मं भिन्नं परस्परम्।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः॥"इति।

११. दश गणाः। यथा - मगणः, यगणः, रगणः, सगणः, तगणः, जगणः, भगणः, नगणः, गगणः, लगणः।

१२. त्रिगुरुः।

१३. आदिलघुः।

१४. लमध्यः।

१५. अन्तगुरुः।

१६. अन्तलघुः।

१७. सानुस्वारः दीर्घश्च विसर्गी च संयोगपूर्वश्च वर्णः गुरुः भवेत्।

१८. द्विविधा।

१९. पादान्ता, पादमध्यगा।

२०. "यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया।। " इति।

२१. "तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः"इति।

२२. "शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः॥"इति।

२३. चतुर्विंशतिः।

२४. द्वात्रिंशत्।

२५. चतुश्चत्वारिंशत्।

२६. अष्टचत्वारिंशत्।

॥ इति त्रयोविंशः पाठः ॥

# २४

# छन्दांसि

## प्रस्तावना

संस्कृतजगति प्रायः सर्वत्र एव छन्दसः प्रयोगः भूयशः दृश्यते। श्लोकादिनिर्माणं तु छन्दः विना प्रायः नैव सम्भवति। छन्दसा रचितं पद्यम् अधिकं सौन्दर्यं विदधाति। अत एव छन्दोमयं संस्कृतजगत् इत्यत्र नास्ति सन्देहावसरः। काव्यनाटकादिलौकिकशास्त्रेषु छन्दसः प्रचुरं प्रयोगः दरीदृश्यते। न केवलं लौकिकसाहित्ये छन्दसः प्रयोगः विद्यते। अपि तु वैदिकसाहित्ये अपि छन्दसः भूयशः प्रयोगः दृश्यते। केवलं यजुर्वेदः एव गद्यमयः वर्तते। अवशिष्टं संहितात्रयं तु पद्यमयम् अस्ति। सामवेदे अर्थववेदे ऋग्वेदे च त्रिष्टुभादिना छन्दसा एव मन्त्राः विरचिताः सन्ति। छन्दःसहितमन्त्रः अधिककालपर्यन्तं स्मरणे तिष्ठन् सौन्दर्यं विधत्ते। प्राचीनशास्त्राकारैः वेदान्तादिशास्त्रग्रन्थाः अपि अनुष्टुभादिना छन्दसा एव रचिताः आसन्। संस्कृतजगति सर्वप्रथमं तु पद्यमयम् एव सर्वम् आसीत्। लौकिककाव्यादिषु अपि लौकिकछन्दसः प्रयोगः दृश्यते। वसन्ततिलकादिना छन्दसा एव रचितः श्लोकः अधिकः मनोग्राही भवति। कालिदासादयः महाकवयस्तु छन्दसा पद्यनिर्माणे अतीव पटवः आसन्। केचन कवयस्तु किञ्चित् एकं छन्दः समाश्रित्य सम्पूर्णं ग्रन्थं रचितवन्तः। अत एव छन्दः विना संस्कृतजगत् अन्धकारमयम् अस्ति। अतः संस्कृतजगति छन्दसः नितराम् आवश्यकता अनुभूयते। प्रकृतपाठे अस्मिन् केषाञ्चित् प्रसिद्धानां छन्दसां लक्षणानि उदाहरणानि च आलोच्यन्ते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

१. विविधानां छन्दसां लक्षणं ज्ञास्यति।
२. छन्दसाम् उदाहरणानि ज्ञास्यति।
३. लक्षणस्य छन्दउदाहरणेषु समन्वयं ज्ञास्यति।
४. काव्येषु विविधेषु स्थलेषु श्लोकानां छन्दोनिर्णयं कर्तुं प्रभवेत्।
५. स्वयम् एतैः छन्दोभिः श्लोकरचने योग्यो भवेत्।
६. छन्दसां भेदोपभेदज्ञानं भवेत्।

## २४.१) मात्रिकच्छन्दांसि

मात्रिकच्छन्दः इत्युक्ते मात्राम् आश्रित्य एव गणाः भवन्ति। प्रति गणं चतस्रः मात्राः वर्तन्ते। अस्मिन् छन्दसि मात्रायाः माहात्म्यम् अधिकं दृश्यते। अत्र अक्षरम् आश्रित्य गणाः न भवन्ति। अत्रापि मात्रिकच्छन्दःसु केवलम् आर्याच्छन्दसः वर्णनं कृतम्।

### २४.१.१) आर्याच्छन्दः

इदम् आर्याच्छन्दः मात्रिकच्छन्दः अस्ति। अर्थात् मात्राम् आधारीकृत्यैव गणस्य गणना भवति। प्रत्येकं गणेषु चतस्रः मात्राः भवन्ति। चतस्रः मात्राः सन्ति चेत् एव एकः गणः भवति।

**आर्यासामान्यलक्षणम् -** आर्याछन्दसः लक्षणम् -

"लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः।

षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः॥

षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः।

चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥" इति।

**अन्वयः-** आर्यायाः प्रथमे अर्धे एतत् लक्ष्म नियतम् (अस्ति) गोपेताः सप्त गणाः (भवन्ति), इह विषमे जः न भवति, षष्ठः अयम् (जः भवति), वा नलघू (भवतः)। च षष्ठे न्ले द्वितीयलात् (पूर्वम्) परके (न्ले) मुखलात् (पूर्वम्) सयतिपदनियमः। चरमे अर्धे (एतत् लक्ष्म नियतम्) पञ्चमके (न्ले) तस्मात् (सयतिपदनियमः), इह षष्ठो लः भवति।

**व्याख्यानम्** - आर्याच्छन्दसः प्रथमार्धे प्रथमद्वितीययोः चरणयोः एतत् उच्यमानं लक्ष्म (लक्षणम्) निश्चितम् अस्ति। किं तत् लक्षणम्। तदा उच्यते - गुरुणा सहिताः सप्त संख्याकाः गणाः सन्ति। अस्याम् आर्यायां विषमे गणे (प्रथम-तृतीय-पञ्चम-सप्तमरूपे गणे) जगणः (मध्यगुरुः) न वर्तते। षष्ठस्थानवर्ती जगणः भवति। अथवा षष्ठे नगणेन साकं एकः लघुस्वरः वर्तते।

अधुना यतिनियमं कथयति - यदि षष्ठस्थानके गणे लघुस्वरेण साकं नगणः वर्तते तर्हि षष्ठस्थानके गणे चत्वारि लघुसंज्ञायुक्तानि अक्षराणि भवन्ति। तत्र चतुर्लघुरूपस्य षष्ठगणस्य तु द्वितीयलघोः पूर्वम् अर्थात् प्रथमलघौ यतिः भवति। एवञ्च षष्ठगणस्य प्रथमलघौ एव पदस्य समाप्तिः भवति। पुनश्च यदि सप्तमस्थानके गणे अपि चत्वारि लघुसंज्ञायुक्तानि अक्षराणि भवन्ति चेत् चतुर्लघुरूपस्य सप्तमगणस्य प्रथमात् लघोः पूर्वम् अर्थात् षष्ठगणस्य अन्तिमे अक्षरे यतिः पदसमाप्तिश्च भवति। सयतिः इति शब्दस्य अर्थः यतिः पदसमाप्तिश्च कार्यद्वयं भवति। एतावत् पूर्वार्धलक्षणं यतिपदनियमसहितम् आलोचितम्।

सम्प्रति द्वितीयार्धस्य लक्षणं कथयति - उत्तरार्धे तृतीयचतुर्थपादयोः पञ्चमस्थानके गणे चत्वारि लघुसंज्ञायुक्तानि अक्षराणि विद्यन्ते चेत् पञ्चमगणस्य प्रथमात् लघोः पूर्वम् अर्थात् चतुर्थगणस्य अन्तिमे अक्षरे यतिः पदसमाप्तिश्च भवेत्। पुनश्च षष्ठस्थानवर्ती गणः एकलघुरूपः भवति। षष्ठगणस्य एकलघुरूपता एव उत्तरार्धस्य पूर्वार्धात् विशेषता, अवशिष्टं सर्वं तु पूर्वार्धवत् भविष्यति। तदित्थं पूर्वार्धे

त्रिंशन्मात्राः, उत्तरार्धे च सप्तविंशतिः इति फलितम्। इदम् आर्याच्छन्दः मात्रिकेषु विषमवृत्तम्। प्रति चरणं भिन्नसंख्यायुक्तानि अक्षराणि विद्यन्ते।

**उदाहरणम्-** आर्याच्छन्दसः उदाहरणम् -

।।।। ,। ऽ। , ऽ ऽ, / ऽ।। , ऽऽ ,।।।। ,।। ऽ , ऽ

सुभगस-लिलाव-गाहा/ पाटल-संस -र्गसुरभि-वनवा-ताः।

ऽ ऽ , ।।।। , ऽ ऽ , /।। ऽ, ।। ऽ ,। ,।। ऽ , ऽ

प्रच्छा-यसुलभ-निद्रा/- दिवसाः- परिणा-म-रमणी-याः॥

**उदाहरणे लक्षणसमन्वयः -** प्रथमार्धस्य प्रथमद्वितीयचरणयोः अन्तःस्थितेन गुरुवर्णेन सह सप्त गणाः विद्यन्ते। एवञ्च विषमे गणे (प्रथमे तृतीये पञ्चमे सप्तमे च ) जगणः न विद्यते। षष्ठे तु लघुस्वरेण सह नगणः वर्तते। अर्थात् षष्ठस्थानके चत्वारि लघुसंज्ञायुक्तानि अक्षराणि सन्ति। अत एव चतुर्लघुरूपस्य षष्ठगणस्य द्वितीयलघोः (सु इत्यस्य) पूर्वम् अर्थात् प्रथमलघौ (ग इत्यस्मिन्) यतिः भवति। एवञ्च षष्ठगणस्य प्रथमलघौ गकारे एव पदस्य समाप्तिः भवति। एवञ्च उत्तरार्धस्य अपि तृतीयचतुर्थचरणयोः अन्तःस्थितेन गुरुवर्णेन साकं सप्त गणाः विद्यन्ते। उत्तरार्धस्य अपि विषमे गणे (प्रथमे तृतीये पञ्चमे सप्तमे च ) जगणः न विद्यते। षष्ठस्थानके गणे एकलघुरूपता विद्यते। सम्प्रति उत्तरार्धस्य यतिनियमं वक्ष्यामः। पञ्चमस्थानके तु चत्वारि लघुसंज्ञायुक्तानि अक्षराणि न विद्यन्ते। अतः प्रकृतश्लोके लक्षणोक्तयतिनियमः तु न प्रवर्तते। प्रकृतश्लोके पूर्वार्धे त्रिंशन्मात्राः, उत्तरार्धे च सप्तविंशतिः मात्राः वर्तन्ते। इदम् आर्याच्छन्दः मात्रिकेषु विषमवृत्तम्। प्रति चरणं भिन्नसंख्यायुक्तानि अक्षराणि विद्यन्ते।

## पाठगतप्रश्नाः-१

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते -

१. आर्याच्छन्दः मात्रिकच्छन्दः उत वार्णिकच्छन्दः।

२. आर्याच्छन्दसः विषमे गणे कः गणः न वर्तते।

३. आर्याच्छन्दः मात्रिकेषु समवृत्तं विषमवृत्तं वा।

४. आर्याच्छन्दसा निर्मितस्य श्लोकस्य पूर्वार्धे कति मात्राः सन्ति।

५. आर्याच्छन्दसा निर्मितस्य श्लोकस्य उत्तरार्धे कति मात्राः सन्ति।

## २४.२) वार्णिकच्छन्दांसि

मात्रिकच्छन्दांसि वर्णयित्वा सम्प्रति वार्णिकच्छन्दांसि वर्ण्यन्ते। अत्र तु गणनिर्माणं वर्णं समाश्रित्य भवति न तु मात्राम्। प्रत्येकं गणेषु त्रीणि अक्षराणि भवन्ति। तत्रापि प्रकृतपाठे अस्माभिः केवलं वार्णिकच्छन्दःसु केवलं समवृत्तच्छन्दसः चर्चा विधीयते। समवृत्तं नाम प्रति चरणं समलक्षणं समानम्



अक्षरं च वर्तते। अर्थात्प्रति चरणं सम्पूर्णं समानं भवति। पुनश्च पाठवृद्धिभयात् अर्धसमवृत्तस्य विषमवृत्तस्य च आलोचना न वर्तते।

## २४.२.१) इन्द्रवज्रा

अनुष्टुप्-छन्दसा एव अधिकानि पद्यानि रचितानि इति नास्ति सन्देहावसरः। तथापि अनुष्टुभं विहाय अधिकानि पद्यानि तु इन्द्रवज्राच्छन्दसा एव रचितानि दरीदृश्यन्ते। अनेन छन्दसा श्लोकनिर्माणम् अत्यन्तं सरलम् अस्ति। पुनश्च वृत्तम् इदं श्रोतुः कर्णमाधुर्यं जनयति। अत एव कवयः भूयशः अनेन छन्दसा श्लोकान् रचयन्ति स्म।

**लक्षणम् -** इन्द्रवज्राच्छन्दसः लक्षणम्- "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति।

**व्याख्यानम् -** त्रिष्टुभः छन्दसः कश्चित् भागः अयम् इन्द्रवज्रा। समवृत्तं छन्दः इदम् अस्ति। यतो हि चतुर्षु पादेषु एव समानानि अक्षराणि समलक्षणानि च भवन्ति। प्रति चरणं तौ इत्युक्ते तगणद्वयम्, जगौ इत्युक्ते जगणेन साकं गुरुद्वयं च भवति।

**उदाहरणे लक्षणसमन्वयः -** अत्र इन्द्रवज्राच्छन्दसः यत् लक्षणं प्रोक्तं तदेव अस्य छन्दसः उदाहरणम् अपि विद्यते। सम्प्रति उदाहरणान्तरं प्रदर्श्यते -

ऽ ऽ ।, ऽ ऽ।,। ऽ।, ऽ ऽ/ ऽ ऽ।,ऽ ऽ।,। ऽ।, ऽ ऽ

गोष्ठे गि-रिं सव्य-करेण- धृत्वा /रुष्टेन्द्र-वज्राह-मिमुक्तवृष्टौ।

ऽ ऽ ।, ऽ ऽ।,। ऽ ।, ऽ ऽ / ऽ ऽ ।, ऽ ऽ।,। ऽ।, ऽ ऽ

यो गोकु-लं गोप-कुलं च- सुस्थं, चक्रे स- नो रक्षतु चक्र-पाणिः॥

अस्य प्रकृतश्लोकस्य चतुर्षु अपि प्रत्येकं चरणेषु क्रमशः तगणद्वयम्, एकः जगणः, गुरुवर्णद्वयं च वर्तते। अत एव इन्द्रवज्राछन्दसः उदाहरणम् इदं विद्यते। अक्षरसंख्याम् आश्रित्य एव गणनिर्धारणं क्रियते। प्रत्येकं गणेषु त्रीणि अक्षराणि वर्तन्ते। उदाहरणे अस्मिन् प्रति चरणं क्रमेण तगणः, तगणः, जगणः, गुरुवर्णद्वयं वर्तते। तथैव प्रति चरणं समगणः समक्रमश्च विद्यते। एवञ्च प्रति चरणम् एकादश अक्षराणि सन्ति। अस्य छन्दसः पादान्ते यतिः भवति। यतिः हि विरामः इति।

## २४.२.२) उपेन्द्रवज्रा

**लक्षणम्** - उपेन्द्रवज्राच्छन्दसः लक्षणम् - "उपेन्द्रवज्रा जतजास्ततो गौ"इति।

**व्याख्यानम्** - उपेन्द्रवज्रा त्रिष्टुभः कश्चित् भेदः। अस्य वृत्तस्य जतजाः इत्युक्ते क्रमशः जगणः, तगणः, जगणः च वर्तन्ते। ततःपरं द्वौ गुरू च स्याताम् इति। तद् वृत्तम् उपेन्द्रवज्रा। अर्थात् उपेन्द्रवज्रावृत्ते प्रति चरणं क्रमशः जगणः, तगणः, जगणः च वर्तते। ततःपरं परं गुरुस्वरविशिष्टाक्षरद्वयं वर्तते। एवञ्च पादस्य अन्ते एव यतिः भवति।

**उदाहरणे लक्षणसमन्वयः - उदाहरणं हि -**

। ऽ ।, ऽ ऽ।,। ऽ।, ऽ ऽ/ । ऽ।, ऽ ऽ ।,। ऽ ।,ऽ ऽ

जिता ज-गत्येष- भवभ्र-मस्तै/-र्गुरूदि-तं ये गि-रिशं स्म-रन्ति।

। ऽ । , ऽ ऽ। ,। ऽ। , ऽ ऽ/ । ऽ। , ऽ ऽ। ,। ऽ। ,ऽ ऽ

उपास्य-मानं क-मलास-नाद्यै/-रुपेन्द्र-वज्रायु-धवारि-नाथैः॥ इति।

उपेन्द्रवज्रानामके छन्दसि प्रति चरणं क्रमशः जगणः, तगणः, जगणः च वर्तते। ततःपरं गुरुवर्णद्वयं विलसति। प्रकृतश्लोके अपि तथैव प्रथमं जगणः ततःपरं तगणः ततःपरं जगणश्च वर्तते। ततःपरं गुरुवर्णद्वयं विलसति। एवञ्च प्रति चरणं एकादश अक्षराणि सन्ति। पुनश्च पादान्ते यतिः सम्भवति। अत एव उपेन्द्रवज्राच्छन्दसः उदाहरणत्वेन अयं श्लोकः गृहीतो भवति।

## २४.२.३) शालिनी

**लक्षणम्**- शालिनीवृत्तस्य लक्षणम् - "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति।

**व्याख्यानम्** - शालिनी त्रिष्टुभ्भेदः। यस्य वृत्तस्यप्रति चरणं म्तौ - मगणतगणौ, तगौ- तगणगुरू, गः - गश्च भवति। अब्धिभिः नाम चतुर्भिः। लोकैः नाम सप्तभिः इति। अर्थात् शालिनीच्छन्दसःप्रति चरणं क्रमेण मगणः, तगणः, पुनः तगणः, गुरुवर्णः, ततःपरं पुनः गुरुवर्णः भवति चेत् तस्य वृत्तस्य शालिनीवृत्तम् इति नाम भवति। चतुर्भ्यः अक्षरेभ्यः परं ततः सप्तभ्यः अक्षरेभ्यः परं च यतिः भवति। यतिः इत्युक्ते विरामो भवति।

**उदाहरणे लक्षणसमन्वयः** - शालिनीच्छन्दसः उदाहरणं तावत् -

ऽ ऽ ऽ, ऽ ऽ। , ऽ ऽ । , ऽ ऽ / ऽ ऽ ऽ, ऽ ऽ। , ऽ ऽ। , ऽ ऽ

अंहो ह-न्ति ज्ञान-वृद्धिं वि-धत्ते/, धर्मं द-त्ते, काम-मर्थं च- सूते।

ऽ ऽ ऽ, ऽ ऽ। , ऽ ऽ । , ऽ ऽ / ऽ ऽ ऽ, ऽ ऽ। , ऽ ऽ। , ऽ ऽ

मुक्तिं द-त्ते सर्व-दोपास्य-माना, पुंसां श्र-द्धाशालि-नी विष्णु-भक्तिः॥

अस्मिन् श्लोके प्रति चरणम् एकादश अक्षराणि विद्यन्ते। एवञ्च प्रकृतश्लोकस्य अस्य आदौ मगणः ततःपरं तगणः ततश्च पुनः तगणः ततःपरं गुरुवर्णद्वयं वर्तते। एवञ्च चतुर्भ्यः अक्षरेभ्यः परं ततः सप्तभ्यः अक्षरेभ्यः परं च यतिः विद्यते। इदम् एव लक्षणं चतुर्षु चरणेषु च उपलभ्यते। अत एव श्लोकोऽयं शालिनीच्छन्दसः उदाहरणं भवति।

## पाठगतप्रश्नाः-२

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते -

६. इन्द्रवज्रावृत्तस्य लक्षणं किम्।

७. इन्द्रवज्रावृत्तस्य एकस्मिन् पादे कति अक्षराणि सन्ति।

८. इन्द्रवज्रावृत्तं समवृत्तं विषमवृत्तं वा।

९. उपेन्द्रवज्रावृत्तस्य लक्षणं किम्।

१०. उपेन्द्रवज्रावृत्तस्य एकस्मिन् पादे कति अक्षराणि सन्ति।

११. शालिनीवृत्तस्य लक्षणं किम्।

१२. शालिनीवृत्तस्य एकस्मिन् पादे कति अक्षराणि सन्ति।

## २४.२.४) रथोद्धता

**लक्षणम्-** रथोद्धतावृत्तस्य लक्षणम् -“रान्नराविह रथोद्धता लगौ”इति।

**व्याख्यानम् -** त्रिष्टुभः छन्दसः कश्चित् रथोद्धतानामकः भेदः वर्तते। यस्य वृत्तस्य पादे रात् (रगणात् ) नरौ (नगणरगणौ), लगौ (लघुगुरू) च स्याताम् चेत् तत् वृत्तं रथोद्धता इति नाम्ना प्रख्यातं भवेत्। अत्र तु पादान्ते यतिव्यवस्था विद्यते। रथोद्धताच्छन्दसः प्रति पादं रगणात् परं नगणः ततःपरं पुनः रगणश्च वर्तते। एवञ्च लघुगरू च स्याताम्। एवञ्च पादस्य अन्ते एव यतिनियमो भवति।

**उदाहरणे लक्षणसमन्वयः -** रथोद्धताच्छन्दसः उदाहरणं तावत् -

ऽ । ऽ,।।। , ऽ। ऽ,। ऽ/ ऽ । ऽ, ।।। , ऽ । ऽ, । ऽ

किं त्वया- सुभट- दूरव-र्जितं, नात्मनो- न सुहृ-दां प्रियं- कृतम्।

ऽ । ऽ,।।। , ऽ। ऽ, । ऽ/ ऽ। ऽ,।।। , ऽ । ऽ, । ऽ

यत्पला-यनप-रायण-स्य ते, याति धू-लिरधु-ना रथो-द्धता॥ इति।

प्रकृतश्लोकस्य अस्य प्रत्येकं चरणेषु रगणात् परं नगणः अस्ति, ततःपरं पुनः रगणः विद्यते, ततःपरम् एकः लघुः एकः गुरुश्च विद्यन्ते। एवञ्च प्रकृतश्लोकस्य अस्य पादान्ते एव यतिः विद्यते। प्रकृतलक्षणेन साकं श्लोकः अयम् अन्वेति। अत एव श्लोकः अयं रथोद्धताच्छन्दसः उदाहरणत्वेन गृहीतो भवति। प्रथमचरणवत् अवशिष्टं चरणम् अपि तथा लक्षणयुक्तं विद्यते। रथोद्धता त्रिष्टुभः कश्चित् भागः अस्ति। अतः अस्य श्लोकस्य प्रत्येकं चरणेषु एकादश अक्षराणि विद्यन्ते। अर्थात् पादचतुष्टयम् आधारीकृत्य चतुश्चत्वारिंशत् अक्षराणि विलसन्ति।

## २४.२.५) वंशस्थम्

संस्कृतसाहित्यजगति वंशस्थछन्दसः प्रचुरं प्रयोगः दृश्यते। एवञ्च छन्दः इदम् अत्यन्तं लोकप्रसिद्धं विद्यते। कालिदासादयः वंशस्थछन्दसा एव बहूनि पद्यानि रचितवन्तः आसन्। अनेन छन्दसा रचिताः श्लोकाः अधिकं चमत्कारं जनयन्ति।

**लक्षणम्-** वंशस्थच्छन्दसः लक्षणं कथयति - “जतौ तु वंशस्थमुदीरितं जरौ”इति।

**व्याख्यानम् -** जगतीच्छन्दसः कश्चन भागः वंशस्थवृत्तं भवति। यस्य वृत्तस्य प्रति पादं जतौ- जगणतगणौ भवतः, पुनश्च जरौ- जगणरगणौ च भवतः चेत् तत् वृत्तं वंशस्थम् इति नाम्ना प्रथितं भवति।

अर्थात् यस्य वृत्तस्य प्रति पादं क्रमेण जगणः, तगणः,ततश्च पुनः जगणः, ततःपरं रगणः च वर्तन्ते चेत् तद् वंशस्थम् इति नाम्ना ख्यातं भवति। छन्दः इदं समवृत्तम् अस्ति। अत एव पादचतुष्टयम् अपि समलक्षणयुक्तं भवति एव। अस्य छन्दसः एकस्मिन् पादे द्वादश अक्षराणि विद्यन्ते। अतः पादचतुष्टयम् आहृत्य अष्टचत्वारिंशत् अक्षराणि भवन्ति। अस्य वृत्तस्य पादान्ते एव यतिः भवति।

उदाहरणे लक्षणसमन्वयः - वंशस्थछन्दसः उदाहरणं तावत्-

। ऽ ।, ऽ ऽ।, ।ऽ।, ऽ।ऽ/।ऽ।, ऽ ऽ।, ।ऽ।, ऽ।ऽ

नमोऽस्त्व-नन्ताय- सहस्र-मूर्तये-/ सहस्र-पादाक्षि-शिरोरु-बाहवे।

।ऽ।, ऽ ऽ।,।ऽ।, ऽ।ऽ/ ।ऽ।, ऽ ऽ।,।ऽ।, ऽ।ऽ

सहस्र-नाम्ने पु-रुषाय- शाश्वते-/, सहस्र-कोटीयु-गधारि-णे नमः॥

प्रकृतश्लोकस्य अस्य प्रत्येकं पादेषु आदौ जगणः वर्तते, ततःपरं तगणः विद्यते, ततःपरं पुनः जगणः, ततःपरं रगणः क्रमेण वर्तन्ते। अत एव वंशस्थवृत्तस्य उदाहरणम् इदम् अस्ति। वंशस्थं समवृत्तम् अस्ति। अतः पादचतुष्टये अपि इदम् एव लक्षणं विद्यते। अत्र एकस्मिन् पादे एव द्वादश अक्षराणि सन्ति। पादचतुष्टयम् आहृत्य अष्टचत्वारिंशत् अक्षराणि विद्यन्ते। पादस्य अन्ते एव यतिः भवति। अत एव वंशस्थच्छन्दसः उदाहरणम् एतत् विद्यते।

## २४.२.६) तोटकम्

संस्कृतजगति तोटकवृत्तस्य अत्यन्तं प्रसिद्धिः विद्यते। इदं च वृत्तं कवीनाम् अत्यन्तं प्रियं विद्यते।

**लक्षणम्-** तोटकवृत्तस्य लक्षणं प्रोच्यते - " इह तोटकमम्बुधिसैः प्रथितम्" इति।

**व्याख्यानम्** - तोटकवृत्तं जगत्याः कश्चित् भागः वर्तते। इदं वृत्तं समवृत्ते अन्तर्गतम् अस्ति। छन्दःशास्त्रे अम्बुधिः इत्युक्ते चत्वारः इत्यवगम्यते। इह – छन्दःशास्त्रे अम्बुधिसैः - चतुर्भिः सगणैः युक्तं भवति चेत् तोटकम् इति नाम्ना प्रख्यातं भवेत्। यस्य च वृत्तस्य प्रति पादं चत्वारः सगणाः वर्तन्ते चेत् तत् वृत्तं तोटकम् इति नाम्ना प्रथितम् अस्ति। तोटकवृत्तस्य पादान्ते यतिः भविष्यति। अस्य वृत्तस्य पादचतुष्टयम् एव समलक्षणघटितं भवेत्। अस्य वृत्तस्य एकस्मिन् पादे द्वादश अक्षराणि वर्तन्ते। पादचतुष्टयम् आहृत्य अष्टचत्वारिंशत् अक्षराणि विद्यन्ते।

उदाहरणे लक्षणसमन्वयः - तोटकवृत्तस्य उदाहरणं तावत्-

।। ऽ,।। ऽ, ।। ऽ,।। ऽ/।। ऽ,।। ऽ, ।। ऽ,।। ऽ

जय रा-म सदा- सुखधा-म हरे/ रघुना-यक सा-यक चा-प धरे।

।। ऽ,।। ऽ,।। ऽ,।। ऽ/ ।। ऽ,।। ऽ, ।। ऽ,।। ऽ

भववा-रणदा-रणसिं-ह प्रभो/ गुणसा-गर ना-गर ना-थ विभो॥

प्रकृतश्लोकस्य अस्य प्रति पादं सगणचतुष्टयं विद्यते। एवञ्च पादचतुष्टयम् एव समानलक्षणयुक्तं विद्यते। यतो हि समवृत्तं वर्तते। एवञ्च अस्य वृत्तस्य एकस्मिन् पादे द्वादश अक्षराणि विद्यन्ते। यतो हि एकस्मिन् पादे चत्वारः गणाः वर्तन्ते। एकस्मिन् गणे च त्रीणि अक्षराणि विद्यन्ते। पादचतुष्टयं समाहृत्य अष्टचत्वारिंशत् अक्षराणि सन्ति। पादस्य अन्ते एव यतिः भवति। यतिः इत्युक्ते विरामः। इदं छन्दः तु वार्णिकच्छन्दः वर्तते।

## २४.२.७) द्रुतविलम्बितम्

संस्कृतसाहित्यजगति द्रुतविलम्बितवृत्तम् अत्यन्तं प्रसिद्धं वर्तते। कालिदासादयः महाकवयः द्रुतविलम्बितं वृत्तं समाश्रित्य एव बहून् श्लोकान् रचितवन्तः आसन्। इदं च समवृत्तं विद्यते। इदं च वृत्तं श्रोतुः अत्यन्तं कर्णमाधुर्यं जनयति।

**लक्षणम्** - तथाहि द्रुतविलम्बितवृत्तस्य लक्षणम् - "द्रुतविलम्बितमाह नभौ भरौ"इति।

**व्याख्यानम्** - इदं च वृत्तं जगत्याः कश्चित् भागः विद्यते। अत एव इदं समवृत्तं विद्यते। यस्य वृत्तस्य प्रत्येकं पादेषु नभौ - नगणः, भगणः च भवति, पुनश्च भरौ - भगणः रगणः च वर्तते चेत् तत् वृत्तं द्रुतविलम्बितम् इति नाम्ना प्रख्यातं भवति। अर्थात् यस्य वृत्तस्य प्रति पदं क्रमेण नगणः , भगणः, भगणः, रगणः भवति चेत् तत् वृत्तं द्रुतविलम्बितम् इति नाम्ना काव्यजगति प्रथितं भवति। इदं समवृत्तं विद्यते। अत एव पादचतुष्टयम् अपि समलक्षणयुक्तं भवति। एवञ्च अस्य वृत्तस्य एकस्मिन् पादे द्वादश अक्षराणि विद्यन्ते। यतो हि एकस्मिन् पादे चत्वारः गणाः वर्तन्ते। एकस्मिन् गणे च त्रीणि अक्षराणि विद्यन्ते। पादचतुष्टयं समाहृत्य अष्टचत्वारिंशत् अक्षराणि सन्ति। पादस्य अन्ते एव यतिः भवति। यतिः इत्युक्ते विरामः। इदं छन्दः तु वार्णिकच्छन्दः वर्तते।

**उदाहरणे लक्षणसमन्वयः** - द्रुतविलम्बितवृत्तस्य उदाहरणं तावत्-

।।। , ऽ ।। , ऽ ।। , ऽ। ऽ/।।। , ऽ।। , ऽ ।। , ऽ। ऽ

द्रुतग-तिः पुरु-षो धनभाजनं, भवति- मन्दग-तिश्च सु-खोचितः।

।।। , ऽ ।। , ऽ।। , ऽ। ऽ/ ।।। , ऽ।। , ऽ।। , ऽ। ऽ

द्रुतवि-लम्बित-खेलग-तिर्नृपः, सकल-राज्यसु-खं प्रिय-मश्नुते॥ इति।

प्रकृतश्लोकस्य अस्य प्रत्येकं पादेषु आदौ नगणः अस्ति, ततःपरं भगणः विद्यते, ततःपरं पुनः भगणः विद्यते, ततःपरं रगणः विद्यते। अत एव श्लोकः अयं द्रुतविलम्बितस्य उदाहरणत्वेन गृहीतो भवति। इदं तु समवृत्तं वर्तते। एवञ्च श्लोकस्य अस्यप्रति चरणं चत्वारः गणाः विद्यन्ते। प्रतिगणं त्रीणि अक्षराणि विद्यन्ते। एवञ्च अस्य श्लोकस्य एकस्मिन् पादे द्वादश अक्षराणि विद्यन्ते। प्रकृतश्लोकस्य पादचतुष्टयं समाहृत्य अष्टचत्वारिंशत् अक्षराणि सन्ति। पादस्य अन्ते एव यतिः भवति। यतिः इत्युक्ते विरामः। इदं छन्दः तु वार्णिकच्छन्दः वर्तते। छन्दः इदम् अत्यन्तं सुन्दरमयं वर्तते। अत एव द्रुतविलम्बितवृत्तस्य अपरं नाम सुन्दरी इति। एवञ्च श्रूयते- "पादान्ते यतिः। अस्यैव 'सुन्दरी' इति नामान्तरम्"इति।

द्रुतविलम्बितस्य उदाहरणान्तरं विद्यते -

इतरपापफलानि यदृच्छया, वितर तानि सहे चतुरानन।

अरसिकेषु कवित्वनिवेदनं, शिरसि मा लिख मा लिख मा लिख॥ इति।

प्रकृतश्लोकस्य द्वितीयचतुर्थपादयोः अन्तिमम् अक्षरं लघुस्वरयुक्तम् अस्ति। परन्तु द्रुतविलम्बितच्छन्दसः तु अन्तिमः गणः भवति रगणः। तस्य तु ऽ। ऽ इति आकृतिः विद्यते। अर्थात् रगणस्य अन्तिमम् अक्षरं गुरुस्वरयुक्तं भवति। अत एव प्रकृतश्लोकस्य द्वितीयचतुर्थयोः पादयोः अन्तिमे अक्षरे गुरुस्वरः नास्ति। अतः प्रकृतश्लोकः अयम् द्रुतविलम्बितस्य उदाहरणत्वेन गण्यः कथं भवति। अस्य उत्तरं तु पादान्ते छन्दःपूरणाय प्रयोजनवशात् लघोः वर्णस्य गुरुत्वेन अपि स्वीकारः भवति। अर्थात् छन्दःपूरणाय लघुगुरुविपरिणामस्तु भवति एव। अत एव प्रकृतश्लोके अपि छन्दःपूरणाय पादान्तस्य वर्णस्य गुरुत्वेन ग्रहणं भवति। अत एव प्रकृतश्लोकः अयं द्रुतविलम्बितवृत्तस्य अपि उदाहरणं भवति।

## पाठगतप्रश्नाः -३

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते -

१३. रथोद्धतावृत्तस्य लक्षणं किम् अस्ति।
१४. रथोद्धतावृत्तेन रचिते पूर्णश्लोके कति अक्षराणि विद्यन्ते।
१५. रथोद्धतावृत्तस्य यतिः कुत्र भवति।
१६. वंशस्थवृत्तस्य लक्षणं किम्।
१७. वंशस्थवृत्तस्य प्रत्येकं चरणेषु कति अक्षराणि सन्ति।
१८. तोटकवृत्तस्य लक्षणं किम्।
१९. तोटकवृत्तस्य प्रत्येकं चरणेषु कति अक्षराणि सन्ति।
२०. द्रुतविलम्बितवृत्तस्य लक्षणं किम्।
२१. द्रुतविलम्बितवृत्तस्य यतिः कुत्र भवति।
२२. द्रुतविलम्बितवृत्तस्य अपरं नाम किम्।

## २४.२.८) भुजङ्गप्रयातम्

काव्यमार्गे इदं वृत्तम् अत्यन्तं लोकप्रियं विद्यते। यतो हि अनेन वृत्तेन श्लोकरचना अत्यन्तं सरला भवति। पुनश्च अस्मिन् वृत्ते समगणः वर्तते। अत एव श्रुतिमाधुर्यम् अपि अधिकतया अनुभूयते। सरलतया सुन्दरश्लोकनिर्माणाय महाकवयः इदम् एव वृत्तम् आश्रितवन्तः। सम्प्रति तस्य वृत्तस्य लक्षणादिकं चर्च्यते।

**लक्षणम् -** भुजङ्गप्रयातस्य लक्षणं तावत् - “भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः। ”इति।

**व्याख्यानम् -** इदं वृत्तं जगत्याः कश्चित् भागः वर्तते। यस्य वृत्तस्यप्रति चरणं चतुर्भिः यगणैः युक्तं स्यात्, तस्य वृत्तस्य भुजङ्गप्रयातम् इति नाम्ना प्रख्यातम्। अर्थात् भुजङ्गप्रयातस्य वृत्तस्य प्रति चरणं चत्वारः यगणाः भवन्ति। एवञ्च अस्य वृत्तस्य पादान्ते एव यतिः भवति। इदं समवृत्तं विद्यते। अत एव पादचतुष्टयम् अपि समलक्षणयुक्तं भवति। एवञ्च अस्य वृत्तस्य एकस्मिन् पादे द्वादश अक्षराणि विद्यन्ते। यतो हि एकस्मिन् पादे चत्वारः गणाः वर्तन्ते। एकस्मिन् गणे च त्रीणि अक्षराणि विद्यन्ते। पादचतुष्टयं समाहृत्य अष्टचत्वारिंशत् अक्षराणि सन्ति। पादस्य अन्ते एव यतिः भवति। यतिः इत्युक्ते विरामः। इदं छन्दः तु वार्णिकच्छन्दः वर्तते।

उदाहरणे लक्षणसमन्वयः - भुजङ्गप्रयातवृत्तस्य उदाहरणं तावत्-

। ऽ  ऽ,। ऽ ऽ, । ऽ  ऽ ,। ऽ ऽ/  । ऽ ऽ,। ऽ  ऽ, । ऽ  ऽ ,। ऽ ऽ

पुरः सा-ध्रुवद्वा-ति मिथ्या विनीतः-/ परोक्षे- करोत्य-र्थनाशं- हताशः।

। ऽ ऽ,। ऽ ऽ, । ऽ  ऽ ,। ऽ ऽ/  । ऽ  ऽ,। ऽ ऽ, । ऽ  ऽ ,। ऽ ऽ

भुजङ्ग-प्रयातो-पमं य-स्य चित्तं-/, त्यजेत्ता-दृशं दु-श्चरित्रं- कुमित्रम्॥ इति

प्रकृतश्लोकस्य अस्यप्रति चरणं चत्वारः यगणाः सन्ति। पादान्ते यतिः अपि वर्तते। अत एव श्लोकः अयं भुजङ्गप्रयातस्य उदाहरणत्वेन गण्यो भवति इति। इदं समवृत्तं विद्यते। अत एव पादचतुष्टयम् अपि समलक्षणयुक्तं भवति। एवञ्च अस्य श्लोकस्य एकस्मिन् पादे द्वादश अक्षराणि विद्यन्ते। प्रकृतश्लोकस्य पादचतुष्टयं समाहृत्य अष्टचत्वारिंशत् अक्षराणि सन्ति।

## २४.२.९) वसन्ततिलका

काव्यजगति अत्यन्तं प्रसिद्धं वृत्तं वसन्ततिलका। प्रायः सर्वे एव कवयः अनेन वृत्तेन काव्यं रचयितुम् अधिकतया इच्छन्ति। इदं वृत्तं अत्यन्तं श्रुतिमधुरं भवति। वसन्ततिलकावृत्तेन रचिताः श्लोकाः काव्यस्य अधिकं सौन्दर्यं वर्धयन्ति।

**लक्षणम् -** वसन्ततिलकावृत्तस्य लक्षणम्- "उक्ता वसन्ततिलका तभजा जगौ गः" इति।

**व्याख्यानम् -** इयं च वसन्ततिलका शक्वर्याः कश्चित् भागः वर्तते। वसन्ततिलकानामकं वृत्तम् उक्तम् अस्ति। तत् कीदृशम् इति। यस्य वृत्तस्य प्रति चरणं तभजाः इत्युक्ते तगण-भगण-जगणाः, जगौ इत्युक्ते जगणः गुरुश्च, गः इत्युक्ते गुरुः अस्ति चेत् तद् वृत्तं वसन्ततिलका इति नाम्ना प्रख्यातम् अस्ति। अर्थात् यस्य वृत्तस्य प्रति चरणं क्रमेण तगणः, भगणः, जगणः , पुनः जगणः वर्तन्ते, ततःपरं गुरुवर्णः भवति, ततश्च पुनः गुरुवर्णः भवति चेत् तद् वृत्तं वसन्ततिलका इति नाम्ना कथितं भवति। अस्य च वृत्तस्य पादान्ते यतिः विद्यते। इदम् अपि समवृत्तं भवति। अतः अस्य अपि पादचतुष्टयं समलक्षणयुक्तं भवति। अस्य वृत्तस्य एकस्मिन् एव चरणे चतुर्दश अक्षराणि विद्यन्ते। एवञ्च पादचतुष्टयम् आहृत्य षट्पञ्चाशत् अक्षराणि विद्यन्ते। अस्य एव वृत्तस्य पादान्ते यतिः विद्यते। यतिः इत्युक्ते विरामः इत्यर्थः। अर्थात् अस्मिन् वृत्ते तु पादस्य अन्ते एव विरामो भवति।

**उदाहरणे लक्षणसमन्वयः -** वसन्ततिलकावृत्तस्य उदाहरणं तावत्-

ऽ ऽ ।, ऽ।।, । ऽ ।,। ऽ ।, ऽ ऽ/ ऽ ऽ।, ऽ।।, । ऽ ।,। ऽ।, ऽ ऽ

फुल्लं व-सन्तति-लकं ति-लकं व-नाल्याः, लीलाप-रं पिक-कुलं क-लमत्र रौति।

ऽ ऽ।, ऽ।।, । ऽ।,। ऽ।, ऽ ऽ/ ऽ ऽ ।, ऽ ।।,। ऽ ।, । ऽ ।, ऽ

वात्येष- पुष्पसु-रभिर्म-लयाद्रि-वातो, यातो ह- रिः स म-धुरां वि-धिना ह-ताः

ऽ

स्मः॥ इति।

प्रकृतश्लोकस्य अस्य प्रति चरणं क्रमेण तगणः, भगणः, जगणः, पुनः जगणः वर्तते। ततःपरं गुरुस्वरयुक्ताक्षरद्वयं वर्तते। अत एव प्रकृतश्लोकः वसन्ततिलकावृत्तस्य उदाहरणत्वेन गृहीतो भवति। इदम् अपि समवृत्तं भवति। अत एव पादचतुष्टयम् अपि समलक्षणयुक्तं भवति। श्लोकस्य अस्य प्रति चरणं चतुर्दश अक्षराणि विद्यन्ते। प्रकृतश्लोके षट्पञ्चाशत् अक्षराणि विद्यन्ते। एवञ्च अस्य श्लोकस्य पादान्ते यतिः विद्यते।

**नामान्तरम्** - वसन्ततिलकायाः बहु नामान्तरं विद्यते। अत्र काचित् कारिका उपलभ्यते -

"सिंहोन्नतेयमुदिता मुनिकाश्यपेन।

उद्धर्षिणीति गदिता मुनिसैतवेन।

रामेण सेयमुदिता मधुमाधवीति॥"इति।

अर्थात् वसन्ततिलकायाः काश्यपमते सिंहोन्नता इति नाम, सैवतस्य मते उद्धर्षिणी इति नाम, रामस्य मते तु माधवी इति नाम। वसन्ततिलकावृत्तस्य नामान्तरम् एव ज्ञात्वा अवगन्तुं शक्यते कियती प्रसिद्धिः आसीत्।

## २४.२.१०) मालिनी

**लक्षणम्** - मालिनीच्छन्दसः लक्षणम्- "ननमयययुतेयं, मालिनी भोगिलोकैः" इति।

**व्याख्यानम्** - इदं च वृत्तम् अतिशक्वर्याः कश्चित् भागः वर्तते। ननमयययुता इत्युक्ते नगणद्वयेन, मगणेन, यगणद्वयेन, युता- युक्ता भवति चेत् सा मालिनी भवति इत्यर्थः। अर्थात् यस्य वृत्तस्य प्रति चरणं क्रमेण नगणः, पुनः नगणः वर्तते, ततःपरं सर्वगुरुः मगणः वर्तते, ततःपरं यगणः, ततःपरं पुनः यगणः भवति चेत् तत् वृत्तं मालिनी इति नाम्ना प्रख्यातम् अस्ति। एवञ्च भोगिः इत्युक्ते अष्टौ इत्यर्थः, लोकः इत्युक्ते सप्त इत्यर्थः। अत एव अष्टमे अक्षरे ततःपरं सप्तमे अक्षरे च यतिः भवति। इदम् अपि समवृत्तं भवति। अतः पादचतुष्टयम् अपि समलक्षणयुक्तं भवेत्। अस्य वृत्तस्य एकस्मिन् एव पादे पञ्चदश अक्षराणि विद्यन्ते। अतः श्लोके अस्मिन् षष्टिः अक्षराणि सन्ति।

**उदाहरणे लक्षणसमन्वयः** - मालिनीवृत्तस्य उदाहरणं तावत्-

।।।, ।।।, ऽ ऽ ऽ,। ऽ ऽ,। ऽ ऽ /।।।, ।।।, ऽ ऽ ऽ,। ऽ ऽ, । ऽ ऽ



अतिवि-पुलल-लाटं, पी-वरोरः-कपाटं, सुधटि-तदश-नोष्ठं व्या-घ्रतुल्य-प्रकोष्ठम्।

।।। , ।।। , ऽ ऽ ऽ,। ऽ  ऽ,। ऽ ऽ / ।।। , ।।। , ऽ ऽ  ऽ,। ऽ  ऽ, । ऽ ऽ

पुरुष-मशनि-लेखाल-क्ष्मणं वी-रलक्ष्मी-रतिसु-रभिय-शोभिर्मा-लिनी वाभ्युपैति॥ इति।

प्रकृतश्लोकस्य प्रत्येकं चरणेषु आदौ नगणः, ततःपरं पुनः नगणः वर्तते, ततःपरं सर्वगुरुः मगणः वर्तते, ततःपरं यगणः ततःपरं पुनः यगणः भवति। एवञ्च अष्टभ्यः अक्षरेभ्यः परं यतिः अस्ति। एवञ्च ततःपरम् अपि सप्तभ्यः अक्षरेभ्यः परं पुनः यतिः दृश्यते। अत एव श्लोकः अयं मालिनीवृत्तस्य उदाहरणत्वेन गण्यते। प्रकृतश्लोकस्य एकस्मिन् एव पादे पञ्चदश अक्षराणि विद्यन्ते। अतः श्लोके अस्मिन् षष्टिः अक्षराणि सन्ति। समवृत्तं छन्दः अस्ति। अत एव पादचतुष्टयम् अपि समलक्षणयुक्तं भवति।

## २४.२.११) शिखरिणी

**लक्षणम्** - शिखरिणीवृत्तस्य लक्षणम् - "रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति।

**व्याख्यानम्** - अत्यष्ट्याः छन्दसः कश्चित् भागः शिखरिणी। यस्य वृत्तस्य प्रति चरणं यमनसभलाः इत्युक्ते यगणः, मगणः, नगणः, सगणः, भगणः, लघुश्च, गः - गुरुश्च वर्तन्ते चेत् तद् वृत्तं शिखरिणी इति नाम्ना प्रख्यातं भवति। रसैः इत्युक्ते षड्भिः, रुद्रैः इत्युक्ते एकादशभिः, छिन्ना - यतिमती सा  शिखरिणी भवति। अर्थात् यस्य वृत्तस्यप्रति चरणं क्रमेण यगणः, मगणः, नगणः, सगणः, भगणः, लघुः, गुरुश्च वर्तन्ते चेत् तस्य वृत्तस्य शिखरिणी इति नाम भवति। एवञ्च षड्भ्यः अक्षरेभ्यः परम् एकादशभ्यः अक्षरेभ्यः परं च यतिः भवति। इदम् अपि समवृत्तम् अस्ति। अतः पादचतुष्टयम् अपि समलक्षणयुक्तं भवेत्। अस्य वृत्तस्य एकस्मिन् एव पादे सप्तदश अक्षराणि विद्यन्ते। अतः वृत्ते अस्मिन् अष्टषष्टिः अक्षराणि सन्ति।

**उदाहरणे लक्षणसमन्वयः** - शिखरिणीवृत्तस्य उदाहरणं तावत्-

। ऽ  ऽ,   ऽ   ऽ   ऽ,  ।।। ,।। ऽ,   ऽ ।। ,। ऽ

यदा कि-ञ्चिद्ज्ञोऽहं-, द्विप इ-व मदा-न्धः समभवम्।

। ऽ  ऽ,  ऽ ऽ  ऽ,     ।।। ,।। ऽ,   ऽ।। ,। ऽ

तदा स-र्वज्ञोऽस्मी-, त्यभव-दवलि-प्तं मम मनः।

। ऽ  ऽ,   ऽ   ऽ   ऽ,  ।।। , ।। ऽ, ऽ।। ,। ऽ

यदा किं-चित् किंचित्- बुधज-नसका-शादव-गतम्

। ऽ  ऽ,  ऽ   ऽ    ऽ,।।। ,।। ऽ,   ऽ ।। ,। ऽ

तदा मू-र्खोऽस्मी-ति, ज्वर इ-व मदो- मे व्यप-गतः॥ इति।

प्रकृतश्लोकस्य अस्य प्रति चरणं क्रमेण यगणः, मगणः, नगणः, सगणः, भगणः, लघुः, गुरुश्च वर्तन्ते। अतः शिखरिणी इति वृत्तस्य उदाहरणत्वेन श्लोकः अयं गण्यो भवति। एवञ्च षड्भ्यः अक्षरेभ्यः परम् यतिः विद्यते। पुनश्च ततःपरं एकादशभ्यः अक्षरेभ्यः परं च यतिः भवति। इदम् अपि समवृत्तम्

अस्ति। अतः पादचतुष्टयम् अपि समलक्षणयुक्तं भवति। अस्य श्लोकस्य एकस्मिन् एव पादे सप्तदश अक्षराणि विद्यन्ते। अतः सम्पूर्णश्लोके अस्मिन् अष्टषष्टिः अक्षराणि सन्ति।

## २४.२.१२) मन्दाक्रान्ता

**लक्षणम्** - मन्दाक्रान्ताच्छन्दसः लक्षणम्- "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्॥"इति।

**व्याख्यानम्** - मन्दाक्रान्तावृत्तम् अत्यष्ट्याः छन्दसः कश्चित् भागः विद्यते। तस्य लक्षणं कथयति - यस्य वृत्तस्य प्रति चरणं क्रमेण म्भौ इत्युक्ते मगणः भगणः च भवतः, ततःपरं नतौ इत्युक्ते नगणः तगणश्च भवतः, ततःपरं तात् तगणात् परं गुरुवर्णद्वयं च भवेत् चेत् तदा मन्दाक्रान्ता इति नाम भवति। अर्थात् यस्य वृत्तस्य प्रति चरणं आदौ मगणः ततःपरं भगणः वर्तते, ततःपरं नगणः ततःपरं तगणः, ततःपरं पुनः तगणः वर्तते, तस्मात् द्वितीयतगणात् च परं गुरुस्वरयुक्ताक्षरद्वयं च वर्तते, तदा तस्य वृत्तस्य मन्दाक्रान्ता इति नाम। अधुना यतिनियमं कथयति - जलधिषडगैः इति। छन्दःशास्त्रे जलधिः इत्युक्ते चत्वारः, अगैः इत्युक्ते सप्तभिः इति। अर्थात् चतुर्भ्यः अक्षरेभ्यः परं यतिः भवति। ततः षड्भ्यः अक्षरेभ्यः परं यतिः वर्तते। ततः सप्तभ्यः अक्षरेभ्यः परं यतिनियमः विद्यते। इदम् अपि समवृत्तम् अस्ति। अतः पादचतुष्टयम् अपि समलक्षणयुक्तं भवेत्। अस्य वृत्तस्य एकस्मिन् एव पादे सप्तदश अक्षराणि विद्यन्ते। अतः वृत्ते अस्मिन् अष्टषष्टिः अक्षराणि सन्ति।

**उदाहरणे लक्षणसमन्वयः** - मन्दाक्रान्तावृत्तस्य उदाहरणं तावत्-

ऽ ऽ ऽ, ऽ | | ,| | | , ऽ ऽ | , ऽ ऽ | , ऽ ऽ

कश्चित्का-न्ताविर-हगुरु-णा स्वाधि-कारात्प्र-मत्तः।

ऽ ऽ ऽ, ऽ| | ,| | | , ऽ ऽ| , ऽ ऽ| , ऽ ऽ

शापेना-स्तङ्गमि-तमहि-मा वर्ष-भोग्येण- भर्तुः।

ऽ ऽ ऽ, ऽ | | ,| | | , ऽ ऽ | , ऽ ऽ| , ऽ ऽ

यक्षश्च-क्रे जन-कतन-यास्नान-पूर्णोद-केषु।

ऽ ऽ ऽ, ऽ| | ,| | | , ऽ ऽ| , ऽ ऽ| , ऽ ऽ

स्निग्धच्छा-यातरु-षु वस-तिं राम-गिर्याश्र-मेषु॥

प्रकृतश्लोकस्य अस्य प्रति चरणम् क्रमशः मगणः भगणः, नगणः, तगणः , पुनः तगणः च वर्तन्ते। तस्मात् च द्वितीयतगणात् च परं गुरुस्वरयुक्ताक्षरद्वयं च वर्तते। अत एव तस्य वृत्तस्य मन्दाक्रान्ता इति नाम। पुनश्च चतुर्भ्यः अक्षरेभ्यः परं यतिः भवति। पुनः ततः षड्भ्यः अक्षरेभ्यः परं यतिः विद्यते। ततः पुनः सप्तभ्यः अक्षरेभ्यः परं यतिः विद्यते। अत एव अयं श्लोकः मन्दाक्रान्तावृत्तस्य उदाहरणत्वेन गण्यो भवति। इदम् अपि समवृत्तम् अस्ति। अतः पादचतुष्टयम् अपि समलक्षणयुक्तं भवेत्। अस्य श्लोकस्य एकस्मिन् एव पादे सप्तदश अक्षराणि विद्यन्ते। अतः श्लोके अस्मिन् अष्टषष्टिः अक्षराणि सन्ति।

## २४.२.१३) शार्दूलविक्रीडितम्

काव्यमार्गेषु अत्यन्तं प्रसिद्धतं छन्दः भवति शार्दूलविक्रीडितम्। संस्कृतजगति अनेन छन्दसा अगणिताः श्लोकाः सन्ति। सम्प्रति तस्य वृत्तस्य लक्षणादिकं विचार्यते।

**लक्षणम्-** शार्दूलविक्रीडितस्य वृत्तस्य लक्षणानि वक्ष्यन्ते- "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति।

**व्याख्यानम्** - इदं वृत्तम् अतिधृत्याः कश्चित् भागः विद्यते। यस्यप्रति चरणं सगुरवः इत्युक्ते गुरुणा एकेन सहिताः, मसजस्तताः - मगणः, सगणः, जगणः, सगणः, तगणद्वयं च स्युः। पुनश्च सूर्यैः इत्युक्ते द्वादशभिः, अश्वैः इत्युक्ते सप्तभिः यतिः भवति। तस्य वृत्तस्य नाम शार्दूलविक्रीडितम् इति। अर्थात् यस्य च वृत्तस्यप्रति चरणं क्रमेण मगणः, सगणः, जगणः, पुनः सगणः, ततःपरं तगणद्वयं च स्युः। एवञ्च द्वादशभ्यः अक्षरेभ्यः परं यतिः भवति। पुनश्च ततः सप्तभ्यः अक्षरेभ्यः परं यतिः भवति। तस्य वृत्तस्य शार्दूलविक्रीडितम् इति नाम। इदम् अपि समवृत्तं भवति। अतः पादचतुष्टयम् अपि समलक्षणयुक्तं भवेत्। अस्य श्लोकस्य एकस्मिन् एव पादे नवदश अक्षराणि विद्यन्ते। अतः सम्पूर्णश्लोके अस्मिन् षट्सप्ततिः अक्षराणि सन्ति।

**उदाहरणे लक्षणसमन्वयः** - शार्दूलविक्रीडितवृत्तस्य उदाहरणं तावत्-

ऽ ऽ ऽ ,।। ऽ,। ऽ । ,।। ऽ, ऽ ऽ । ,ऽ ऽ। , ऽ

या कुन्दे-न्दुतुषा-रहार-धवला- या शुभ्र-वस्त्रावृ-ता।

ऽ ऽ ऽ ,।। ऽ, । ऽ । ,।। ऽ, ऽ ऽ । ,ऽ ऽ। , ऽ

या वीणा-वरद-ण्डमण्डि-तकरा- या श्वेत-पद्मास-ना।

ऽ ऽ ऽ ,।। ऽ,। ऽ। ,।। ऽ, ऽ ऽ। , ऽ ऽ । , ऽ

या ब्रह्मा-च्युतश-ङ्करप्र-भृतिभि-र्देवैः स-दा वन्दिता।

ऽ ऽ ऽ ,।। ऽ,। ऽ । ,।। ऽ, ऽ ऽ। , ऽ ऽ । , ऽ

सा मां पा-तु सर-स्वती भ-गवती- निःशेष-जाड्या-पहा॥ इति।

प्रकृतश्लोकस्य अस्यप्रति चरणं क्रमेण मगणः, सगणः, जगणः, पुनः सगणः, ततःपरं तगणद्वयं च सन्ति। एवञ्च द्वादशभ्यः अक्षरेभ्यः परं यतिः भवति। पुनश्च ततः सप्तभ्यः अक्षरेभ्यः परं यतिः भवति। अत एव अयम् एव श्लोकः शार्दूलविक्रीडितस्य वृत्तस्य उदाहरणत्वेन गृहीतो भवति। इदम् अपि समवृत्तं भवति। अतः पादचतुष्टयम् अपि समलक्षणयुक्तं भवति। अस्य श्लोकस्य एकस्मिन् एव पादे नवदश अक्षराणि विद्यन्ते। अतः सम्पूर्णश्लोके अस्मिन् षट्सप्ततिः अक्षराणि सन्ति। इदं च वार्णिकच्छन्दः भवति।

## पाठगतप्रश्नाः-४

अत्र केचित् पाठगताः प्रश्नाः प्रदीयन्ते -

२३. भुजङ्गप्रयातवृत्तस्य लक्षणं किम् अस्ति।

२४. भुजङ्गप्रयातवृत्तेन रचिते श्लोके कति अक्षराणि सन्ति।

२५. वसन्ततिलकावृत्तस्य लक्षणं किम् अस्ति।

२६. वसन्ततिलकावृत्तस्य प्रत्येकं पादेषु कति अक्षराणि सन्ति।

२७. काश्यपमते वसन्ततिलकायाः अपरं नाम किम् अस्ति।

२८. मालिनीवृत्तस्य लक्षणं किम् अस्ति।

२९. मालिनीवृत्तस्य प्रत्येकं पादेषु कति अक्षराणि सन्ति।

३०. शिखरिणीवृत्तस्य लक्षणं किम् अस्ति।

३१. शिखरिणीवृत्तस्य प्रत्येकं पादेषु कति अक्षराणि सन्ति।

३२. मन्दाक्रान्तावृत्तस्य लक्षणं किम् अस्ति।

३३. शार्दूलविक्रीडितवृत्तस्य लक्षणं किम् अस्ति।

## पाठसारः

संस्कृतसाहित्यजगति छन्दसः प्रचुरं प्रयोगः दृश्यते। शाकुन्तलादिलौकिककाव्ये वैदिकसाहित्ये च छन्दसः प्रयोगः अस्ति एव। अस्मिन् पाठे आर्यावृत्तरूपस्य मात्रिकच्छन्दसः वर्णना क्रियते। आर्याच्छन्दसः लक्षणविचारः, उदाहरणम्, यतिनियमश्च उच्यते। मात्रिकच्छन्दं वर्णयित्वा अत्यन्तं प्रसिद्धम् इन्द्रवज्रावृत्तम् उपेन्द्रवज्रावृत्तञ्च वर्णयति। यस्य वृत्तस्यप्रति चरणं तगणद्वयम्, जगणेन साकं गुरुद्वयं च भवति चेत् अस्य वृत्तस्य इन्द्रवज्रा इति नाम भविष्यति। अस्य पादान्ते यतिः भवति। एवञ्च उपेन्द्रवज्रावृत्ते प्रथमं जगणः वर्तते, ततःपरं तगणः वर्तते, ततःपरं पुनः जगणः वर्तते। ततःपरं परं गुरुस्वरविशिष्टाक्षरद्वयं वर्तते। एवञ्च पादस्य अन्ते एव यतिः भवति। शालिनीच्छन्दसः प्रत्येकं चरणेषु प्रथमं मगणः ततःपरं तगणः ततःपरं पुनः तगणः ततःपरं गुरुवर्णः ततःपरं पुनः गुरुवर्णः भवति चेत् शालिनीवृत्तम् इति नाम भवति। चतुर्भ्यः अक्षरेभ्यः परं सप्तभ्यः अक्षरेभ्यः परं च यतिः भवति। ततःपरं रथोद्धतावृत्तम् आलोचयति। रथोद्धताच्छन्दसः प्रत्येकं पादेषु रगणात् परं नगणः रगणश्च वर्तते। एवञ्च लघुगरू च स्याताम्। एवञ्च पादस्य अन्ते एव यतिनियमो भवति। पुनश्च वंशस्थस्य लक्षणं कथयति - यस्य वृत्तस्य प्रत्येकं पादेषु जगणः, ततःपरं तगणः,ततश्च पुनः जगणः, ततःपरं रगणः च क्रमेण वर्तन्ते चेत् तद् वंशस्थम्। तोटकवृत्तस्य लक्षणं भवति - यस्य च वृत्तस्य प्रत्येकं पादेषु चत्वारः सगणाः वर्तन्ते चेत् तत् वृत्तं तोटकम् इति नाम्ना प्रथितम्। तोटकवृत्तस्यापि पादान्ते यतिः भवति। सम्प्रति

द्रुतविलम्बितस्य लक्षणं कथयति - यस्य वृत्तस्य प्रतिपदे आदौ नगणः भवति, ततःपरं भगणः भवति, ततःपरं पुनः भगणः भवति, ततःपरं रगणः भवति चेत् तत् वृत्तं द्रुतविलम्बितम् इति नाम्ना काव्यजगति प्रथितं भवति। पुनः यस्य वृत्तस्यप्रति चरणं चतुर्भिः यगणैः युक्तं स्यात्, तस्य वृत्तस्य भुजङ्गप्रयातम् इति नाम्ना प्रख्यातम्। अस्य अपि वृत्तस्य पादान्ते यतिः भवति। पुनः यस्य वृत्तस्य प्रत्येकं चरणेषु आदौ तगणः वर्तते, ततःपरं भगणः वर्तते, ततःपरं जगणः अस्ति, ततश्च पुनः जगणः वर्तते, ततःपरं गुरुवर्णः भवति, ततश्च पुनः गुरुवर्णः भवति चेत् तद् वृत्तं वसन्ततिलका इति नाम्ना कथितं भवति। अस्य च वृत्तस्य पादान्ते यतिः विद्यते। ततःपरं मालिनीवृत्तस्य लक्षणं कथयति - यस्य वृत्तस्य प्रत्येकं चरणेषु आदौ नगणः, ततःपरं पुनः नगणः वर्तते, ततःपरं सर्वगुरुः मगणः वर्तते, ततःपरं यगणः ततःपरं पुनः यगणः भवति चेत् तत् वृत्तं मालिनी इति नाम्ना प्रख्यातम् अस्ति। यस्य वृत्तस्यप्रति चरणं क्रमेण यगणः, मगणः, नगणः, सगणः, भगणः, लघुः, गुरुश्च वर्तन्ते चेत् तस्य वृत्तस्य शिखरिणी इति नाम भवति। एवञ्च षड्भ्यः अक्षरेभ्यः परम् एकादशभ्यः अक्षरेभ्यः परं च यतिः भवति। एवञ्च यस्य वृत्तस्य प्रति चरणं आदौ मगणः ततःपरं भगणः वर्तते, ततःपरं नगणः ततःपरं तगणः, ततःपरं पुनः तगणः वर्तते, तस्मात् द्वितीयतगणात् च परं गुरुस्वरयुक्ताक्षरद्वयं च वर्तते, तदा तस्य वृत्तस्य मन्दाक्रान्ता इति नाम। यस्य च वृत्तस्यप्रति चरणं क्रमेण मगणः, सगणः, जगणः, पुनः सगणः, ततःपरं तगणद्वयं वा स्युः। एवञ्च द्वादशभ्यः अक्षरेभ्यः परं यतिः भवति। पुनश्च ततःपरं सप्तभ्यः अक्षरेभ्यः परं यतिः भवति। तस्य वृत्तस्य शार्दूलविक्रीडितम् इति नाम स्यात्। एवञ्च एतानि छन्दांसि समासेन प्रकृतपाठे चर्चितानि सन्ति।

## पाठान्तप्रश्नाः

अत्र केचित् पाठान्तप्रश्नाः प्रदीयन्ते -

१. उदाहरणपुरःसरम् आर्याच्छन्दसं वर्णयत।
२. इन्द्रवज्रावृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
३. उपेन्द्रवज्रावृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
४. शालिनीवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
५. रथोद्धतावृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
६. वंशस्थवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
७. तोटकवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
८. भुजङ्गप्रयातवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
९. वसन्ततिलकावृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
१०. द्रुतविलम्बितवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
११. मालिनीवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।
१२. शिखरिणीवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।

१३. मन्दाक्रान्तावृत्तस्य लक्षणम् उदाहरणञ्च लिखत।

१४. शार्दूलविक्रीडितवृत्तस्य लक्षणम् उदाहरणञ्च लिखत।

## पाठान्तप्रश्नानाम् उत्तराणि

अत्र पाठान्तप्रश्नानाम् उत्तराणि प्रदीयन्ते -

१. मात्रिकच्छन्दः।

२. जगणः।

३. विषमवृत्तम्।

४. त्रिंशत्।

५. सप्तविंशतिः।

६. "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति।

७. एकादश।

८. समवृत्तम्।

९. "उपेन्द्रवज्रा जतजास्ततो गौ"इति।

१०. एकादश।

११. "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति।

१२. एकादश।

१३. "रान्नराविह रथोद्धता लगौ"इति।

१४. चतुश्चत्वारिंशत्।

१५. पादान्ते।

१६. " जतौ तु वंशस्थमुदीरितं जरौ"इति।

१७. द्वादश।

१८. " इह तोटकमम्बुधिसैः प्रथितम्" इति।

१९. द्वादश।

२०. "द्रुतविलम्बितमाह नभौ भरौ"इति।

२१. पादान्ते।

२२. सुन्दरी।

२३. "भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः। "इति।

२४. अष्टचत्वारिंशत्।

२५. "उक्ता वसन्ततिलका तभजा जगौ गः" इति।

२६. चतुर्दश।

२७. सिंहोन्नता।

२८. "ननमयययुतेयं, मालिनी भोगिलोकैः" इति।

२९. पञ्चदश।

३०. "रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति।

३१. सप्तदश।

३२. "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्॥"इति।

३३. "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्"इति।

॥ इति चतुर्विंशः पाठः ॥

२५

# शब्दार्थालङ्कारः शब्दालङ्कारश्च

## प्रस्तावना -

मानवाः सदा एव सौन्दर्यस्य पूजकाः भवन्ति। अतिप्राचीनकालात् एव अलङ्कारादीनां प्रयोगं कृतवन्तः कवयः। इतिहासपुराणादिवत् अलङ्कारशास्त्रम् अपि अतिप्राचीनम् भवति। कवयः यदा पद्यादिकं सृजन्ति, तदा एव स्वतः अलङ्कारादयः कृतिषु समायान्ति। वैदिकवाङ्मये अपि अलङ्कारशास्त्रस्य प्रयोगः विद्यते। यथा- ऋग्वेदे औषससूक्तिषु उषादेव्याः वर्णनावसरे उपमाद्यलङ्काराणां प्रयोगः दृश्यते। ऋग्वेदे अतिशयोक्त्यलङ्कारस्य प्रयोगः दृश्यताम्।

"**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्याद्वत्त्यनश्नन्नन्योऽभिचाकशीति॥" इति।**

अयञ्च अलङ्कारः कविवाणीतः स्वतः एव आयाति, न तु बहुयत्नेन। शरीरात् लावण्यं पृथक् न कदापि भवति, तथैव शब्दार्थमयात् काव्यशरीरात् अलङ्कारः पृथक् न भवति। यथा खलु वलयकुण्डलादयः मानवदेहस्य शोभां सम्पादयन्तः अलङ्कारशब्देन व्यपदिश्यन्ते। तथैव अनुप्रासरूपकोपमादयः शब्दस्य अर्थस्य च शोभां सम्पादयन्तः रसम् उपकुर्वन्ति। अत एव अनुप्रासरूपकादयः अलङ्कारपदवाच्याः भवन्ति इति काव्यवेदिभिः। अलङ्कारः हि शब्दार्थमयस्य काव्यस्य शोभां वर्धयति। यथा वह्नेः उष्णत्वं धर्मः भवति, तथैव अलङ्कारस्य सौन्दर्यं धर्मः भवति। अत एव वामनेन प्रोक्तम् - "सौन्दर्यमलङ्कारः" इति। जयदेवः कथयति यत् वह्नेः उष्णताराहित्यं कदापि न सम्भवति। तथैव काव्यम् अपि अलङ्काररहितं कदापि न भवति। तथाहि प्रोक्तं जयदेवेन-

"**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मात् अनुष्णमनलङ्कृती॥" इति।**

प्रकृते पाठे वयं केषाञ्चित् अलङ्काराणां लक्षणम्, किं प्रयोजनम्, अलङ्कारस्य प्रभेदः इति अस्मिन् विषये संक्षेपेण आलोचनां कुर्मः।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान् भवती वा-

- अलङ्कारस्य लक्षणं ज्ञातुं प्रभवेत्।
- अलङ्कारस्य प्रयोजनं ज्ञातुं शक्नुयात्।



- अलङ्कारस्य भेदोपभेदान् ज्ञातुं प्रभवेत्।
- शब्दार्थालङ्कारे विद्यमानम् अलङ्कारं ज्ञातुं प्रभवेत्।
- शब्दालङ्कारे विद्यमानम् अलङ्कारं ज्ञातुं प्रभवेत्।
- कवीनां निर्मिते श्लोकादौ अलङ्कारनिर्णयं कर्तुं योग्यो भवेत्।
- स्वयम् अपि अलङ्कारीदानां प्रयोगं कृत्वा श्लोकनिर्माणे समर्थो भवेत्।
- उदाहरणे लक्षणसमन्वयः कथं कार्यः इति ज्ञातुं शक्नुयात्।
- अलङ्कारयुक्ते श्लोकादौ अधिकां चमत्कृतिम् अवगन्तुं योग्यो भवेत्।

## २५.१) अलङ्कारलक्षणम्

अथ अलंकारः परिचाय्यते। लोकप्रसिद्धः अयम् अलङ्कारशब्दः अलम् इति उपपदपूर्वकात् कृधातोः घञ्प्रत्ययेन निष्पन्नो भवति। अलङ्कारविषयकं शास्त्रं निगद्यते अलङ्कारशास्त्रम् इति। को नाम अलंकारः। "काव्यशोभाकरान् धर्मान् अलंकारान् प्रचक्षते" इति दण्डी प्रोक्तवान्। अलङ्क्रियते अनेन इत्यलंकारः इति वामनानन्दवर्धनादयः परिभावयन्ति। मम्मटाचार्यस्य मते शब्दार्थमयस्य काव्यशरीरस्य सौन्दर्यवर्धकाः उपमादयः अलङ्काराः भवन्ति। तदेव प्राह -

**"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलंकारास्तेऽनुप्रासोपमादयः॥"इति।**

अलङ्काराः प्रथमतया वाच्यलक्ष्यव्यङ्ग्यार्थस्य शोभां वर्धयन्ति। ततः वाच्यलक्ष्याद्यर्थातिशयमुखेन सम्भाविनं मुख्यरसम् उपकुर्वन्ति। लोकसमाजे अपि आदौ अलङ्कारः कण्ठाद्यङ्गानां शोभां वर्धयति। ततःपरम् अलङ्काराः कण्ठाद्यङ्गानाम् उत्कर्षाधानद्वारेण शरीरिणम् उपकुर्वन्ति। पण्डितराजः जगन्नाथः स्वकीये रसगङ्गाधरनामके ग्रन्थे अलङ्कारं निर्दिशति। तथाहि प्रोक्तम् - "अथास्य प्रागभिहितलक्षणस्य काव्यात्मनो व्यङ्ग्यस्य रमणीयताप्रयोजकाः निरूप्यन्ते।" इति। विश्वेश्वरस्य पण्डितस्य मते तु अलङ्कारः रसोपकारकः भवति। अलङ्कारः अर्थद्वारा रसम् उपकरोति। तथाहि प्रोक्तम् अलङ्कारकौस्तुभे- "तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम्।

**अर्थालङ्काररहिता विधेवेव सरस्वती॥" इति।**

कविराजः विश्वनाथः साहित्यदर्पणनामकस्य ग्रन्थस्य दशमोल्लासे अलङ्कारान् विवृणोति। तथाहि अलङ्कारस्य लक्षणं प्राह-

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्॥ इति।**

यथा केयूरादिकाः शरीरशोभातिशायिनः आत्मानम् उपकुर्वन्ति, तेनैव प्रकारेण अनुप्रासोपमादयः अलङ्काराः शब्दार्थशोभातिशायिनः काव्यात्मभूतस्य रसादेः उपकारकाः भवन्ति। अलङ्काराः अस्थिराः सन्ति अत एव तेषां गुणवत् आवश्यकी स्थितिः। अर्थात् गुणा अपि उत्कर्षकाः सन्ति, किन्तु ते गुणाः रसस्य स्थिराः धर्माः स्वरूपविशेषाः सन्ति। अलङ्काराः शब्दार्थयोः अस्थिराः धर्माः शब्दार्थद्वारेण च रसम् उत्कर्षयन्ति। इदम् एव अलङ्काराणां प्रयोजनं यत् शब्दार्थद्वारेण रसादेः उपकारकम् अस्ति।

अलङ्कारशब्दः द्विधा निष्पन्नो भवति। अलङ्कृतिः अलङ्कारः इति भावव्युत्पन्नः पक्षः। अलङ्क्रियते अनेन इति करणव्युत्पन्नः पक्षः भवति।

## २५.२) अलङ्कारस्य प्रकारः

प्रायः अलङ्कारः द्विविधः भवति। शब्दालङ्कारः अर्थालङ्कारः च इति। केषाञ्चित् नये उभयालङ्कारः अपि भवति। अनुप्रासादयः शब्दालंकाराः उपमारूपकादयः अर्थालंकाराः। पुनरुक्तवदाभासालङ्कारः शब्दार्थालङ्कारः अर्थात् उभयालंकारः भवति। शब्दालङ्कारे शब्दस्य एव प्राधान्यता भवति। अर्थालङ्कारे अर्थस्य प्राधान्यता भवति।

येऽलङ्काराः शब्दाश्रिताः ते शब्दालङ्काराः कथ्यन्ते। ''शब्दपरिवृत्त्यसहत्वं'' यत्र विद्यते, अर्थात् येऽलङ्काराः शब्दपरिवर्तनं न सहन्ते, प्रयुक्तशब्दस्थाने पर्यायवाचकशब्दप्रयोगं न सहन्ते इत्यर्थः। यावत् शब्दः तावदलङ्कारस्य सत्ता वर्तते, यदा शब्दपरिवर्तनं स्यात् तदालङ्कारोऽपि नष्टः स्यात्। अतः एतादृशी स्थितिर्यत्र विद्यते ते शब्दालङ्काराः भवन्ति। येऽलङ्काराः अर्थाश्रिताः ते अर्थालङ्काराः कथ्यन्ते। ''शब्दपरिवृत्तिसहत्वं'' यत्र विद्यते, अर्थात् येऽलङ्काराः शब्दपरिवर्तनं सहन्ते, प्रयुक्तशब्दस्थाने पर्यायवाचकशब्दप्रयोगं सहन्ते इत्यर्थः। यावत् अर्थः तावदलङ्कारस्य सत्ता वर्तते, यदा अर्थपरिवर्तनं स्यात् तदालङ्कारोऽपि नष्टः स्यात्। अतः एतादृशी स्थितिर्यत्र विद्यते ते अर्थालङ्काराः भवन्ति।

वस्तुतस्तु शब्दालङ्कारः ध्वनेः अर्थात् नादस्य अलङ्कारः भवति तस्य श्रवणेन आनन्दो जायते। अर्थालङ्कारः अर्थस्य अलङ्कारः भवति। शब्दालङ्कारः भवति शरीरम्, अर्थालङ्कारः भवति तस्य चिदानन्दस्वरूपम्। शब्दालङ्कारः मानवानां मनसि रूपस्य आलोकं प्रददाति। अर्थालङ्कारः चिन्मयरूपेण चित्तम् आलोकयति। शब्दालङ्कारे शब्दस्य परिवर्तनं सम्भवम् नास्ति। परन्तु अर्थालङ्कारे तु शब्दस्य परिवर्तनं सम्भवम् अस्ति।

शब्दालङ्कारः अर्थालङ्कारः शब्दार्थालङ्कारः(उभयालङ्कारः) इति भेदेन अलङ्कारः प्रायः त्रिविधः

## २५.३) अलङ्कारस्य प्रयोजनम्

अलङ्कारः सौन्दर्यम्। सुन्दरं वस्तु यत्र तिष्ठति, तत्रैव अस्माकं नेत्रं धावति। सौन्दर्यपूर्णस्य वस्तुनः दर्शनेन अस्माकं नेत्रम् आनन्दं लभते। सौन्दर्यपूर्णस्य भोजनस्य स्वीकारेण सदा एव मनसि आनन्दः जायते। तद्वत् सौन्दर्यपूर्णस्य काव्यस्य पठनेन अपि मनसि आनन्दः उत्पद्यते। परमार्थतः उक्तिवैचित्र्यम् अलङ्कारः भवति। वस्तुतस्तु यदि साक्षात् किमपि कथयति चेत् तत् कथामात्रम् अस्ति। ततः चमत्कृतिः अपि न उत्पद्यते। यथा - मम नाम देवदत्तः। अहं प्रतिदिनं प्रातः विद्यालयं गच्छामि। इति एतादृशानि वाक्यानि साक्षात् कञ्चित् अर्थं बोधयन्ति। अस्मिन् वाक्ये चमत्कारः न दृश्यते। तस्मात् चमत्कारविशिष्टं वाक्यं नास्ति चेत् तत् काव्यं न भवति। तत्र तु चमत्कारविशिष्टस्य वाक्यस्य अभावात् जनानाम् आनन्दः एव न भवति। उक्तिवैचित्र्यम् अस्ति चेत् ततः आनन्दः भवति। वामनेन स्वस्य काव्यालङ्कारसूत्रस्य आदिमसूत्रे प्रोक्तम् अस्ति यत् "काव्यं ग्राह्यमलङ्कारात्"इति। यत् किम् अपि काव्यम्

अस्माकं ग्राह्यं न भवति। काव्ये उक्तिवैचित्र्यम् अस्ति चेत् तत् काव्यम् अस्माकं ग्राह्यम् भवति। सालङ्कारस्य काव्यता भवति इति कुन्तकाचार्यस्य मतम्। तत एव खलु अलंकारो नाम काव्यशरीरभूतयोः शब्दार्थयोः लोकोत्तररमणीयत्वनिष्पादकः राजमार्गः भवति। तस्मात् तदतिशयमाहुः वामनभट्टाः काव्यं ग्राह्यमलंकारादिति। काचित् महिला अलङ्कारं गृह्णाति चेत् सा अतीव सुन्दरी प्रतिभाति। तथैव काव्ये अलङ्काराः सन्ति चेत् तत् काव्यम् अत्यन्तं प्रियं भवति। अलङ्कारः यथा देहस्य सौन्दर्यं वर्धयति तथैव शब्दालङ्कारः अर्थालङ्कारश्च काव्यशरीरस्य सौन्दर्यं वर्धयति। उक्तिवैचित्र्यं नास्ति चेत् तत् काव्यं ग्राह्यं न भवति। चन्द्रः इव मुखम् इति उपमालङ्कारस्य उदाहरणं भवति। सामान्यार्थः भवति यत् चन्द्रे यादृशं सौन्दर्यं तिष्ठति, तादृशं सौन्दर्यं मुखे अपि विद्यते। अस्मिन् वाक्ये साक्षात् वाक्यार्थः विद्यते। तस्मात् उक्तिवैचित्र्यस्य गूढार्थस्य च अभावात् अस्मिन् वाक्ये चमत्कारः नास्ति। अत एव काव्यत्वेन ग्राह्यं न भवति। चन्द्रः इव मुखम् इत्यत्र तु सौन्दर्यम् इत्यर्थः गुप्ततया विद्यते। अस्मिन् वाक्ये गूढार्थस्य उक्तिवैचित्र्यस्य च विद्यमानात् चमत्कारः विलसति। अत एव वाक्यम् इदं श्रुत्वा जनानां मनसि आनन्दः उत्पद्यते। वामनेन अलङ्कारवता काव्येन किं फलम्। तदोच्यते - “काव्यं सत् दृष्टार्थोऽदृष्टार्थं प्रीतिकीर्तिहेतुत्वात्।”

सत्काव्यम् अस्माभिः आदरणीयम् अस्ति। यतो हि सतः काव्यस्य पठनेन प्रीतिः उत्पद्यते। तच्च दृष्टं प्रयोजनं भवति। पुनश्च सतः काव्यस्य पठनेन कीर्तिः उत्पद्यते। तच्च अदृष्टं प्रयोजनं भवति। भामहस्य मते काव्ये अलङ्कारः एव प्रधानः भवति। अलङ्कारः एव काव्यस्य आत्मा। आत्मानं विना शरीरं व्यर्थं भवति। तथैव अलङ्कारं विना काव्यम् अपि व्यर्थं भवति।

## पाठगतप्रश्नाः-१

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते।

१. अलङ्कारशब्दस्य भावसाधनव्युत्पत्त्या कः विग्रहः भवति।

२. अलङ्कारशब्दस्य करणसाधनव्युत्पत्त्या कः विग्रहः भवति।

३. दण्डिनः मते अलङ्कारस्य लक्षणं किम् अस्ति।

४. प्रायः कतिविधः अलङ्कारः भवति।

५. शब्दालङ्कारस्य एकम् उदाहरणं लिखत

६. अर्थालङ्कारस्य एकम् उदाहरणं लिखत

७. कस्य मते काव्यस्य आत्मा अलङ्कारः।

८. भामहस्य मते काव्यस्य आत्मा कः।

९. मम्मटमते अलङ्कारस्य लक्षणं किम्।

१०. विश्वनाथमते अलङ्कारस्य लक्षणं किम्।

## २५.४) शब्दार्थालङ्कारः

क्वचित् पुनः शब्दार्थयोः उभयोः एव सन्निवेशविशेषवैचित्र्येण चमत्कृतिः दृश्यते। तादृशस्थलेषु शब्दार्थयोः उभयोः एव चमत्कृतिविधायकत्वात् शब्दार्थोभयालङ्कारता स्वीक्रियते। अत एव शब्दार्थालङ्कारपदवाच्यं भवति। अत्र शब्दस्य अर्थस्य च प्राधान्यं भवति। शब्दस्य परिवर्तनं शक्यं भवति। काव्यमार्गे पुनरुक्तवदाभासनाम्ना एक एव तादृशः अलङ्कारः दृश्यते।

वैशिष्ट्यानि -

१. शब्दस्य अर्थस्य च प्राधान्यं दृश्यते।
२. अर्थस्य च परिवर्तनं न शक्यं भवति।
३. शब्दस्य परिवर्तनं शक्यं भवति।
४. काव्यमार्गे पुनरुक्तवदाभासनाम्ना एकः अलङ्कारः अस्ति।

### २५.४.१) पुनरुक्तवदाभासः

लक्षणम्- साहित्यदर्पणग्रन्थे कविराजः विश्वनाथः पुनरुक्तवदाभासालङ्कारस्य लक्षणं कथयति-

"आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।

पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥"इति।

**अन्वयः** - आपाततः यत् अर्थस्य पौनरुक्त्या अवभासनं भिन्नाकारशब्दगः स पुनरुक्तवदाभासः अलङ्कारः स्यात्।

**शब्दार्थः** - आपाततः - श्रवणमात्रेण, यत् - यत्, अर्थस्य – अर्थस्य, पौनरुक्त्या - पुनरुक्तिमाध्यमेन, अवभासनम्- प्रतीतिः, भिन्नाकारशब्दगः - भिन्नाकृत्याः शब्दगतः, सः - तत्पदवाच्यः, पुनरुक्तवदाभासः - पुनरुक्तवदाभासनामकः, अलङ्कारः भवति।

**सामान्यार्थः** - कस्मिंश्चित् वाक्ये प्रयुक्तस्य भिन्नाकृतिशब्दसमूहस्य श्रवणमात्रेण कश्चित् समानः अर्थः प्रतिभासते। सा एव पुनरुक्तिः इति उच्यते। परन्तु सम्यग्तया वाक्यार्थस्य पर्यालोचनात् परं कस्यचित् भिन्नार्थस्य प्रतीतिः भवति। स एव पुनरुक्तवदाभासालङ्कारः इति उच्यते। पुनरुक्तवद् आभासते, न तु वस्तुगत्या पुनरुक्तिः। अर्थात् सामान्यतया भिन्नाकृतियुक्तस्य शब्दस्य दर्शनेन तु समानः अर्थः अस्ति इति प्रतिभाति। परन्तु यदा शब्दानाम् अर्थविषये सम्यग्तया आलोचना क्रियते तदा तु कश्चित् भिन्नार्थः प्रतीयते। अत एव पुनरुक्तिवद् आभासते, न तु वस्तुगत्या पुनरुक्तिदोषः विद्यते। एतादृशवाक्यकथनेन चमत्कारः उत्पद्यते। एतेन काव्यस्य सौन्दर्यम् अभिवर्धते। पुनरुक्तवदाभासः इति अन्वर्थसंज्ञा विद्यते। यतो हि अलङ्कारस्य नामानुसारेण एव लक्षणम् अपि दृश्यते।

**उदाहरणे समन्वयः** - अत्र उदाहरणं तावत्-

**"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः।**

**जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः।" इति**

**श्लोकार्थः** - सर्पः यस्य अलङ्कारः, कर्पूरनिभः शुभ्रकिरणयुक्तः चन्द्रः यस्य आश्रये शोभमानः। तादृशः शिवः विपदः अस्मान् संसारान् च अवतु।

प्रकृतश्लोके अस्मिन् भुजङ्गकुण्डलादिशब्दानां भिन्नाकृतिः विद्यते। परन्तु भुजङ्गकुण्डलादिशब्दानां भिन्नाकृतित्वे सत्यपि आपातमात्रेण सर्पः इति समानः अर्थः आगच्छति। यतो हि उभयोः शब्दयोः सर्पः इति लोकप्रसिद्धार्थः अस्ति। अत एव शब्दस्य श्रवणमात्रं हि पुनरुक्तिभ्रमः आपद्यते। किन्तु सम्यग्तया वाक्यार्थस्य पर्यालोचनात् परं तु भिन्नार्थः प्रतिभासते। पर्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्य इत्याद्यन्यार्थत्वम् आयाति। एवञ्च भुजङ्गकुण्डलादिशब्दस्य तु श्रवणमात्रेण सर्पः इति समानः अर्थः आयाति। परन्तु वाक्यार्थस्य पर्यालोचनेन ज्ञायते यत् भुजङ्गकुण्डलशब्दयोः भिन्नार्थत्वं विद्यते, इति लक्षणसमन्वयः भवति। एवञ्च अत्रैव शशी, शुभ्रांशुः, शीतगुः इति त्रयाणां शब्दानाम् चन्द्रः इत्येव समानः अर्थः श्रूयते। तस्मात् शब्दानां श्रवणमात्रेण भ्रमवशात् पुनरुक्तिदोषः भवति। परन्तु वाक्यार्थस्य पर्यालोचनेन ज्ञायते यत् शशीशब्दस्य कर्पूरम् इति अर्थः भवति, शुभ्रांशुशब्दस्य श्वेतकिरणम् इत्यर्थः भवति, शीतगुशब्दस्य चन्द्रः इत्यर्थः च भवति। अतः पुनरुक्तिदोषः नास्ति। (सदा) पायात् अव्यात् इति क्रियापदद्वयम् एव रक्षणार्थं प्रतिपादयति। तस्मात् श्रवणमात्रेण समानस्य अर्थस्य आभासात् पुनरुक्तिदोषः भवति। किन्तु सम्यग्तया वाक्यार्थालोचनावसरे अपायात् अव्यात् इति पदच्छेदः। अपायशब्दस्य अमङ्गलम् इति अर्थः भवति। अव्यात् इत्यस्य तु रक्षणम् इति अर्थः भवति। अतः पुनरुक्तिभ्रमः न भवति। अत्र आदौ आपातदृष्ट्या शब्दानां समानः अर्थः प्रतिभासते, अतः पुनरुक्तिदोषः भवति। परन्तु वाक्यार्थस्य सम्यग्तया पर्यालोचनेन भिन्नार्थत्वं प्रतिभासते। अत एव पुनरुक्तवदाभासालङ्कारः इति उच्यते। पुनः उक्तवत् आभासते, परन्तु वस्तुगत्या पुनरुक्तिः न भवति।

शब्दालङ्कारे शब्दस्य प्राधान्यं भवति। शब्दालङ्कारे शब्दस्य परिवर्तनं न शक्यं भवति। परन्तु शब्दार्थालङ्कारे तु शब्दस्य परिवर्तनं शक्यं भवति। यथा- भुजङ्गकुण्डलादिशब्दस्य स्थाने "हरः शिवः" इति शब्दप्रयोगः शक्यः अस्ति। शशिशुभ्रांश्वित्यादिशब्दस्य स्थाने शब्दपरिवर्तनं शक्यम् अस्ति। एवमेव अन्यत्र यथायोग्यः शब्दः कल्पनीयः भवति।

## २५.५) शब्दालङ्कारः

यत्र सम्पाद्यते श्रुतिमाधुर्यं शब्दानाम् एव सन्निवेशविशेषेण तत्र स्वीक्रियते शब्दालङ्कारः। मूलतः शब्दालङ्कारे वर्णस्य पदस्य वाक्यस्य च प्राधान्यं दृश्यते। अत एव शब्दालङ्कारः वर्णध्वनिः पदध्वनिः वाक्यध्वनिः च भवति। तत्र मूलतया अनुप्रासे वर्णध्वनिः अस्ति। यमकवक्रोक्तिश्लेषादिषु अलङ्कारेषु पदध्वनिः विद्यते। सर्वयमके वाक्यध्वनिः विद्यते। शब्दालङ्कारे शब्दस्य एव प्राधान्यं दृश्यते।

वैशिष्ट्यानि -

१. शब्दालङ्कारे शब्दस्य प्राधान्यं विद्यते।
२. शब्दालङ्कारे वर्णस्य पदस्य च प्राधान्यं विद्यते।
३. शब्दालङ्कारे शब्दस्य परिवर्तनं न कदापि कर्तुं शक्यते।

४. शब्दालङ्कारे शब्दानाम् एव सन्निवेशेन चमत्कारः भवति।

५. शब्दालङ्कारः वर्णध्वनिः पदध्वनिः वाक्यध्वनिश्च भवति।

अधः सम्प्रति शब्दालङ्कारविषये आलोचना क्रियते-

## २५.५.१) अनुप्रासः

लक्षणम् - अनुप्रासालङ्कारस्य लक्षणं प्राह साहित्यदर्पणे कविराजः विश्वनाथः-"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् "इति।

**अन्वयः** - स्वरस्य वैषम्ये अपि यत् शब्दसाम्यं सः अनुप्रासः।

**सामान्यार्थः** - स्वरस्य भेदे सत्यपि सदृशस्य व्यञ्जनवर्णस्य आवृत्तिः अनुप्रासालङ्कारपदवाच्या भवति। स्वरवर्णस्य साम्ये सति कोऽपि चमत्कारः न जायते। अत एव स्वरवर्णस्य साम्ये कश्चित् अलङ्कारः निर्दिष्टः नास्ति। परन्तु व्यञ्जनवर्णस्य साम्ये तु चमत्कारः भवति। अत एव अनुप्रासालङ्कारः निर्दिष्टः अस्ति। अत एव वर्णस्य वर्णसमूहस्य वा पौनःपुन्येन आवृत्तिः भवति चेत् अनुप्रासालङ्कारः उत्पद्यते। केवलं ध्वनिसाम्यं न अलङ्कारः भवति। परन्तु रसस्य, रसाभासस्य, भावस्य, भावाभासस्य च उपकारकत्वेन शब्दसाम्यं भवति चेत् अनुप्रासालङ्कारः उत्पद्यते।

**अनुप्रासस्य भेदः-**

अनुप्रासः पञ्चविधः भवति।

१. छेकानुप्रासः।

२. वृत्त्यनुप्रासः।

३. श्रुत्यनुप्रासः।

४. अन्त्यानुप्रासः।

५. लाटानुप्रासः।

**छेकानुप्रासः -**

लक्षणम्- अनुप्रासस्य अलङ्कारस्य एकः भागः छेकानुप्रासः अलङ्कारः। तस्य लक्षणं प्रोच्यते- " छेको व्यञ्जनसंघस्य सकृत्साम्यमनेकधा"इति।

**अन्वयः** - व्यञ्जनसंङ्घस्य सकृत् अनेकधा साम्यं छेकः।

**सामान्यार्थः** - अनेकेषां व्यञ्जनवर्णानां स्वरूपतः क्रमतः च एकवारं सादृश्यं भवति चेत् छेकानुप्रासः अलङ्कारः उत्पद्यते। सङ्घः नाम बहूनां समूहः भवति। एकस्य द्वयोः वा वर्णयोः मेलनेन अनुप्रासः न भवति। यथा- धृतच्युताङ्कुरः इत्यत्र तकारद्वयस्य सादृश्ये अपि छेकानुप्रासः न भवति। छेकशब्दस्य सामान्यार्थः भवति रसिकः इति। रसिकजनस्य एव वाक्ये अयम् अलङ्कारः प्रयुक्तो भवति। अत एव छेकालङ्कारः इति नाम। अन्वर्थसंज्ञा इयम् अस्ति।

**उदाहरणे लक्षणसमन्वयः** - अस्य अलङ्कारस्य उदाहरणं तावत्-

**"आदाय बकुलगन्धानन्धीकुर्वन्पदे पदे भ्रमरान्।**

**अयमेति मन्दं मन्दं कावेरीवारिपावनः पवनः॥" इति।**

**श्लोकार्थः** - कावेर्याः जलस्पर्शेन पूतः बकुलस्य गन्धग्राही वायुः पदे पदे मोहग्रस्तं कृत्वा मन्दं मन्दम् अग्रे सरति।

अत्र गन्धान्धी इत्यत्र संयुक्तवर्णस्य न्ध इत्यस्य द्विरावृत्तिः संजाता। कावेरीवारि इत्यत्र वकारस्य रकारस्य च द्विरावृत्तिः अस्ति। पावनः पवनः इत्यत्र पकारस्य वकारस्य नकारस्य च द्विरावृत्तिः जाता। प्रकृतश्लोके स्वरूपतः क्रमतश्च उभयथा आवृत्तिः जाता। अत एव छेकानुप्रासः अलङ्कारः अस्ति।

### वृत्त्यनुप्रासालङ्कारः

**लक्षणम्** - वृत्त्यनुप्रासालङ्कारस्य लक्षणम् उच्यते साहित्यदर्पणकारेण-

**"अनेकस्यैकधा साम्यम् असकृद्वापि अनेकधा।**

**एकस्य सकृद् अप्येष वृत्त्यनुप्रास उच्यते॥" इति।**

**शब्दार्थः** - काव्ये बहूनां व्यञ्जनानाम्, एकधा - केवलस्वरूपेण, असकृत् - पुनः पुनः, अनेकधा - स्वरूपानुसारेण क्रमानुसारेण च (वर्णस्य पौर्वापर्यानुसारेण), एकस्य – एकस्य व्यञ्जनस्य, सकृत् - एकवारम्, साम्यम् - सादृश्यम्, वृत्त्यनुप्रासः - वृत्त्यनुप्रासालङ्कारः, उच्यते - कथ्यते।

**सामान्यार्थः** - १) बहूनां व्यञ्जनानां स्वरूपतः एकवारम् एकाधिकवारम् वा आवृत्तिः भवति चेत् वृत्त्यनुप्रासालङ्कारः इति कथ्यते। २) व्यञ्जनानां स्वरूपतः क्रमतश्च पौनःपुन्येन आवृत्तिः भवति चेत् वृत्त्यनुप्रासालङ्कारः इति कथ्यते। ३) पुनश्च एकस्य व्यञ्जनवर्णस्य केवलम् एकवारम् आवृत्तिः भवति चेत् वृत्त्यनुप्रासालङ्कारः इति कथ्यते। ४) एकस्य वञ्जनवर्णस्य एकाधिकवारम् आवृत्तिः भवति चेत् वृत्त्यनुप्रासालङ्कारः इति कथ्यते।

**उदाहरणे लक्षणसमन्वयः** - अत्र उदाहरणं तावत्-

**"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-**
**क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।**
**नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-**
**प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः॥" इति।**

**श्लोकार्थः** - चतुर्दिक् कुसुमसौरभेण विस्तृता अस्ति। तत्र कुसुमसौरभे भ्रमरः मधु लुब्धवान्। तेन भ्रमरेण आकम्पितः आम्रमुकुलः। तस्य समीपे कोकिलाः विचरन्ति। एतादृशानां कोकिलानां कण्ठरवेन कर्णसन्तापः उत्पद्यते। तादृशेषु वसन्तदिवसेषु प्रियतमायाः चिन्तायां मग्नः। एवञ्च प्राणसख्या दयितया सह मेलने उत्कण्ठिताः पथिकाः अत्यन्तं कष्टेन पन्थानम् अतिक्रामन्ति।

अत्र रसोल्लासैरमी इति पाठः अस्ति। अत्र रकारस्य सकारस्य च असकृत् सादृश्यम् अस्ति। अत्र साम्यं तु क्रमेण नास्ति। अपि तु पौर्वापर्यभेदेन अस्ति। यथा- रस इत्यत्र रकारात् परं सकारः अस्ति, सैर इत्यत्र सकारात् परं रकारः अस्ति। अत एव वृत्त्यनुप्रासालङ्कारः अस्ति। अत्र श्लोकस्य द्वितीयपादे ककारस्य लकारस्य क्रमतः स्वरूपस्य च असकृत् आवृत्तिः जाता। अत एव वृत्त्यनुप्रासालङ्कारः इति कथ्यते। प्रथमे पादे तकारस्य धकारस्य च असकृत् आवृत्तिः अस्ति। अत एव

वृत्त्यनुप्रासालङ्कारः वर्तते। कथं कथम् इत्यत्र बहूनां व्यञ्जनानाम् एकतया आवृत्तिः विद्यते। अत एव वृत्त्यनुप्रासालङ्कारः अस्ति।

**श्रुत्यनुप्रासालङ्कारः**

**लक्षणम्**- श्रुत्यनुप्रासालङ्कारस्य लक्षणं प्राह साहित्यदर्पणनामके ग्रन्थे कविराजः विश्वनाथः -

**"उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके।**
**सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते॥" इति।**

**अन्वयः** - तालुरदादिके एकत्र स्थाने उच्चार्यत्वात् व्यञ्जनस्य एव यत् सादृश्यं तत् श्रुत्यनुप्रास उच्यते।

**शब्दार्थः** - एकत्र – एकस्मिन् एव स्थाने (उच्चारणस्थाने), तालुरदादिके - तालुदन्तादिके स्थाने, उच्चार्यत्वात् - उच्चारितत्वात्, व्यञ्जनस्यैव- केवलं व्यञ्जनवर्णस्य, सादृश्यम् - साम्यम्, श्रुत्यनुप्रासः - श्रुत्यनुप्रासपदवाच्यम्, उच्यते - कथ्यते।

**सामान्यार्थः** - तालुदन्तप्रभृतिभ्यः समोच्चारणस्थानेभ्यः उच्चारितानां व्यञ्जनवर्णानां यत् सादृश्यं भवति तत् श्रुत्यनुप्रासालङ्कारः इति कथ्यते।

**उदाहरणे लक्षणसमन्वयः** - अत्र श्रुत्यनुप्रासालङ्कारस्य उदाहरणं कथयति।

**"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।**
**विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः॥" इति।**

**श्लोकार्थः** - शिवस्य दृष्टिपातेन मदनः भस्मीभूतः जातः। यस्याः दृष्ट्या भस्मीभूतः मदनः पुनः उज्जीवितः जातः। तस्याः त्रिनयनविजयिन्याः सुनयनायाः रमण्याः स्तुतिं कुर्मः।

जीवयन्ति, याः, जयिनीः इत्यत्र जकारस्य यकारस्य च एकाधिकवारं प्रयोगः अस्ति। द्वयोः वर्णयोः तालु उच्चारणस्थानम् अस्ति। "इचुयशानां तालु" इति। अत एव जकारयकारयोः तालु इति समानोच्चारणस्थानवशात् श्रुत्यनुप्रासः अलङ्कारः अस्ति।

## पाठगतप्रश्नाः-२

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते -

११. शब्दार्थालङ्कारे शब्दपरिवर्तनं शक्यम् अस्ति न वा।

१२. शब्दार्थालङ्कारस्य उदाहरणम् एकं लिखत।

१३. पुनरुक्तवदाभासालङ्कारस्य लक्षणं प्रतिपादयत।

१४. शब्दालङ्कारे शब्दस्य परिवर्तनं शक्यं न वा।

१५. शब्दालङ्कारस्य एकम् उदाहरणं लिखत।

१६. शब्दालङ्कारः वाक्यध्वनिः भवति न वा।

१७. अनुप्रासालङ्कारस्य लक्षणं लिखत।

१८. कतिविधः अनुप्रासालङ्कारः भवति।

१९. छेकानुप्रासस्य लक्षणं किम् अस्ति।

२०. छेकशब्दस्य अर्थः कः।

२१. वृत्त्यनुप्रासालङ्कारस्य लक्षणं किम् अस्ति।

२२. श्रुत्यनुप्रासालङ्कारस्य लक्षणं किम् अस्ति।

---

### अन्त्यानुप्रासालङ्कारः

लक्षणम् - अन्त्यानुप्रासालङ्कारस्य लक्षणं कथयति साहित्यदर्पणग्रन्थे विश्वनाथः -

**"व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु।**
**आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥" इति।**

**अन्वयः** - यथावस्थं व्यञ्जनं चेत् आद्येन स्वरेण सह आवर्तते अन्त्ययोज्यत्वात् तत् अन्त्यानुप्रास उच्यते।

**सामान्यार्थः** - पदस्य पादस्य वा अन्ते स्थितः व्यञ्जनवर्णः, अनुस्वारेण विसर्गेण वा सह स्वरवर्णादिना युक्तः सन् यथा अवतिष्ठते। तथैव यथासम्भवं तस्य वर्णस्य आदिस्थितेन स्वरेण सह आवृत्तः भवति चेत् अन्त्यानुप्रासः अलङ्कारः भवति। पदस्य पादस्य अन्ते अलङ्कारः अयम् उत्पन्नः भवति। यथा –

केशः काशस्तबकविकासः कायः प्रकटितकरभविलासः।
चक्षुर्दग्धवराटककल्पं त्यजति नो चेतः काममनल्पम्।।

अत्र प्रथमपादस्य अन्त्ये आसः (विकासः) इति अस्ति। द्वितीयपादस्य अन्ते आसः (विलासः) इति अस्ति। एवञ्च तृतीयपादस्य अन्त्ये अल्पम् (कल्पम्)। चतुर्थपादस्य अन्त्ये अल्पम् इति अस्ति। अत एव आद्यस्वरेण सह यथावस्थितस्य व्यञ्जनस्य पुनः उच्चारणं जातम् अस्ति। अत एव अन्त्यानुप्रासालङ्कारः विद्यते। अस्मिन् श्लोके पादान्तः अन्त्यानुप्रासः विद्यते।

### लाटानुप्रासः

लक्षणम् - लाटानुप्रासस्य लक्षणम् प्राह कविराजः विश्वनाथः -

**"शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः।**
**लाटानुप्रास इत्युक्तः॥" इति**

**अन्वयः** - तात्पर्यमात्रतः भेदे शब्दार्थयोः पौनरुक्त्यं स लाटानुप्रासः इति उक्तः अस्ति।

**सामान्यार्थः** - आपातमात्रेण शब्दस्य अर्थस्य च पुनरुक्तिः लक्षिता भवति। परन्तु वाक्यार्थबोधकाले तु अर्थभेदप्रतीतिः जायते, स लाटानुप्रासः भवति। पूर्वोक्तः वृत्त्यनुप्रासादिः

वर्णभित्तिकः अस्ति। अयं लाटानुप्रासः तु शब्दभित्तिकः अस्ति। शब्दगतसाम्यम् अस्मिन् अनुप्रासे दृश्यते। अत्र आपातमात्रेण अर्थस्य अपि साम्यं दृश्यते। परन्तु वाक्यार्थबोधकाले अर्थभेदस्तु जायते।

**उदाहरणे लक्षणसमन्वयः** - अत्र उदाहरणं तावत् -

**"धन्यः स एव तरुणो नयने तस्यैव नयने।**
**युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी॥" इति।**

**श्लोकार्थः** - युवजनानां सम्मोहनकारिणी विद्यास्वरूपिणी इयं कन्या यस्य सकाशे तिष्ठति। स तरुणः धन्यः भवति। तस्य नयनम् एव नयनम् (सार्थकम्) अस्ति।

अत्र नयनशब्दस्य आवृत्तिः कृता अस्ति। आपातमात्रेण भिन्नार्थत्वम् नास्ति। किन्तु वाक्यार्थबोधकाले अन्तिमनयनशब्दस्य तु सार्थकम् इति अर्थः अस्ति। अत्र आपातदृष्ट्या आवृत्तस्य नयनशब्दस्य समानः अर्थः अस्ति। परन्तु सम्यग्तया पर्यालोचनेन ज्ञायते यत् द्वयोः शब्दयोः भिन्नार्थत्वम् अस्ति इति लक्षणसमन्वयः।

**यमकालङ्कारः**

लक्षणम् - यमकालङ्कारस्य लक्षणं प्राह विश्वनाथः -

**"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।**
**क्रमेण तेनैवावृत्तिः यमकं विनिगद्यते॥" इति।**

**अन्वयः** - अर्थे सति पृथगर्थायाः स्वरव्यञ्जनसंहतेः तेन क्रमेण एव आवृत्तिः यमकं विनिगद्यते।

**सामान्यार्थः** - अर्थस्य विद्यमाने सति भिन्नार्थविशिष्टतया, अर्थस्य अविद्यमाने सति निरर्थकतया स्वरव्यञ्जनवर्णानाम् एकवारम् उच्चारणात् परं पूर्वक्रमानुसारेण पुनरुच्चारितः भवति चेत् यमकालङ्कारः भवति। अस्मिन् अलङ्कारे कुत्रचित् कुत्रचित् उच्चारितयोः पदयोः अर्थः तिष्ठति, कुत्रचित् कुत्रचित् अर्थः नास्ति, कुत्रचित् एकं पदम् अर्थवत् अपरं च निरर्थकम् अस्ति। अत एव सत्यर्थे इति पदं प्रयुक्तम् अस्ति। अस्मिन् अलङ्कारे कुत्रचित् एकदेशस्थितानां वर्णानाम्, कुत्रचित् पादस्थितवर्णानाम्, कुत्रचित् श्लोकार्धस्थितवर्णानाम् आवृत्तिः भवति।

**उदाहरणेन साकं लक्षणसमन्वयः** - अत्र उदाहरणं तावत् -

**"नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।**
**मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोहरैः॥" इति।**

**श्लोकार्थः** - श्रीकृष्णः सम्मुखे पुष्पसमृद्धं सुरभिं वसन्तकालं दृष्टवान्। अस्मिन् वसन्ते पलाशवृक्षसमूहः नवीनपत्रेण सुसज्जितः अस्ति। विकसितं कमलं परागेण आकीर्णम् अस्ति। रौद्रस्य उत्तापेन सुकुमारः लताग्रभागः क्लान्तः अस्ति।

अस्मिन् श्लोके पलाशः, सुरभिः इति द्वयोः शब्दयोः आवृत्तिः जाता। भिन्नार्थकतया द्विरावृत्तिः जाता। अत्र प्रथमपलाशशब्दस्य पत्रम् इत्यर्थः, द्वितीयपलाशशब्दस्य पलाशवृक्षविशेषः इत्यर्थः। पुनश्च प्रथमसुरभिशब्दस्य सुगन्धः इत्यर्थः अस्ति। एवञ्च द्वितीयसुरभिशब्दस्य वसन्तकालः इत्यर्थः।

भिन्नार्थविशिष्टतया पलाश – सुरभि इति शब्दयोः आवृत्तिः जाता। लतान्त, पराग इति शब्दयोः पुनरावृत्तिः जाता। अस्मिन् श्लोके प्रथमः लतान्तशब्दः अन्तिमः परागशब्दः निरर्थकश्च अस्ति। अत एव अस्मिन् श्लोके यमकालङ्कारः विद्यते।

**वक्रोक्त्यलङ्कारः**

**लक्षणम्** - वक्रोक्त्यलङ्कारस्य लक्षणं प्राह विश्वनाथः साहित्यदर्पणे-

**"अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेत् यदि।**
**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिः ततो द्विधा॥" इति।**

**अन्वयः** - अन्यस्य अन्यार्थकं वाक्यम् अन्यः यदि श्लेषेण काक्वा वा अन्यथा योजयेत् तदा सा वक्रोक्तिः नाम अलङ्कारः स्यात्।

**सामान्यार्थः** - वाक्ये कञ्चित् अर्थम् उद्दिश्य वक्ता किञ्चित् वाक्यं वक्ति। परन्तु श्रोता वाक्यम् इदं श्रुत्वा श्लेषेण काक्वा वा भिन्नम् अर्थं गृह्णाति। तदा वक्रोक्तिः भवति। अर्थात् वक्तुः इष्टम् अर्थं परित्यज्य श्लेषेण काक्वा वा कञ्चित् भिन्नम् अर्थं गृह्णाति।

वक्रोक्तिः द्विविधा भवति। यथा श्लेषवक्रोक्तिः काकुवक्रोक्तिः चेति। श्लेषेण अर्थात् अनेकार्थस्य सहायेन या वक्रोक्तिः सा श्लेषवक्रोक्तिः। काक्वा अर्थात् स्वरादिविकृतेन या वक्रोक्तिः सा काकुवक्रोक्तिः अस्ति।

**उदाहरणेन साकं लक्षणसमन्वयः** - श्लेषवक्रोक्तेः उदाहरणम् -

**"के यूयं, स्थल एव सम्प्रति वयम्, प्रश्नो विशेषाश्रयः,**
**किं ब्रूते विहगः, स वा फणिपतिर्यत्रास्ति सुप्तो हरिः॥" इति।**

के यूयम् इति वक्ता प्रश्नम् अकरोत्। परन्तु श्रोता क इति शब्दस्य जलम् इति अर्थं गृह्णाति। यतो हि प्रश्नवाचकः जलवाचकः च कशब्दः अस्ति। जलवाचकस्य कशब्दस्य सप्तम्याः एकवचने के इति रूपम्। तदा श्रोता कथयति स्थले एव सम्प्रति वयम्। वक्ता अवगतवान् यत् श्रोता मम वाक्यस्य अर्थं न ज्ञातवान्। वक्ता स्पष्टतया कथयति यत् प्रश्नो विशेषाश्रयः इति। अर्थात् प्रश्नवाचकं कशब्दं स्वीकृत्य मम प्रश्नः अस्ति। श्रोता विशेषशब्दं भङ्क्त्वा श्लेषेण अर्थं प्रतिपादयति। विशब्दस्य पक्षी इति अर्थः, शेषः इति शब्दस्य सर्पः इत्यर्थः अस्ति। श्रोता श्लेषेण प्रश्नस्य अर्थम् अवगम्य उत्तरति यत् किं ब्रूते विहगः स वा फणिपतिः यत्र अस्ति सुप्तः हरिः। इति श्लेषवक्रोक्तेः उदाहरणम् अस्ति।

काकुवक्रोक्तेः उदाहरणं तावत् -

**"काले कोकिलवाचाले सहकारमनोहरे।**
**कृतागसः परित्यागात् तस्याः चेतो न दूयते॥" इति**

**श्लोकार्थः** - कोकिलः यदा वाचालः, आम्रमुकुलं यदा विकसितम्। तस्मिन् वसन्तकाले कृतापराधं पतिं त्यक्त्वा सख्याः चित्तं दुःखग्रस्तं न भवति इति सामान्यार्थः।

परन्तु काक्वा विपरीतः अर्थः आयाति। वसन्तकाले कोकिलः यदा उन्मत्तः,यदा आम्रमुकुलं विकसितम् अस्ति। तस्मिन् वसन्तकाले प्रियेण साकं प्रियतमायाः आलिङ्गने अत्यन्तम् आग्रहः भवति।

वसन्तकाले प्रियः कदापि अपराधं करोति चेत् अपि प्रियतमा तं प्रियं न त्यजति। अर्थात् वसन्तकाले प्रियविरहे प्रियतमायाः अत्यन्तं दुःखं भवति। अस्मिन् श्लोके किम् इति प्रश्नसूचकं पदम् अस्ति इति चिन्तयित्वा भिन्नस्वरेण श्लोकः अयं वक्तव्यः अस्ति।

श्लेषः नाम श्लिष्टैः पदैः अनेकार्थाभिधाने श्लेष इष्यते। अर्थात् अनेकार्थवाचकं पदं श्लिष्टपदम् अस्ति। एकवारम् उच्चारितं पदम् अनेकार्थस्य वाचकं भवति। अयञ्च श्लेषालङ्कारः अष्टविधः भवति। यथा- वर्णगतः, प्रत्ययगतः, लिङ्गगतः, प्रकृतिगतः, पदगतः, विभक्तिगतः, वचनगतः, भाषागतः च इति। साहित्यदर्पणे कविराजः विश्वनाथः कारिकाम् आह-

**"श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।**
**वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि॥**
**श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः।" इति।**

विश्वनाथः साहित्यदर्पणे अष्टौ भेदाः श्लेषालङ्कारान् प्रतिपादितवान्। प्रत्येकस्य उदाहरणपूर्वकम् आलोचनं कृतम् अस्ति। परन्तु अत्र सामान्यतया केवलं श्लेषालङ्कारस्य विषये चर्चा विहिता अस्ति।

## पाठगतप्रश्नाः-३

अत्र अधः केचित् पाठगतप्रश्नाः प्रदीयन्ते -

२३. अन्त्यानुप्रासालङ्कारस्य लक्षणं किम् अस्ति।
२४. लाटानुप्रासालङ्कारस्य लक्षणं लिखत।
२५. यमकालङ्कारस्य लक्षणं लिखत।
२६. वक्रोक्त्यलङ्कारस्य लक्षणं लिखत।
२७. वक्रोक्तिः कतिविधा भवति।
२८. श्लेषः नाम कः।
२९. श्लेषालङ्कारः कतिविधः।

## पाठसारः

पाठे अस्मिन् शब्दार्थमयस्य काव्यशरीरस्य शोभाकरान् अलङ्कारान् प्रतिपदितवान्। मूलतया अलङ्कारः त्रिविधः भवति। १) शब्दार्थालङ्कारः, २) शब्दालङ्कारः, ३) अर्थालङ्कारः इति। तत्र शब्दार्थालङ्कारे शब्दस्य अर्थस्य च प्राधान्यं भवति। शब्दालङ्कारे शब्दस्य एव प्राधान्यं भवति। अर्थालङ्कारे अर्थस्य प्राधान्यं भवति। काव्यमार्गे पुनरुक्तवदाभासनामकः एकः एव शब्दार्थालङ्कारः दृश्यते। अनुप्रासयमकवक्रोक्त्यादयः शब्दालङ्काराः भवन्ति। तत्रापि अनुप्रासालङ्कारः पञ्चविधः भवति। यथा- १)

छेकानुप्रासः, २) वृत्त्यनुप्रासः, ३) श्रुत्यनुप्रासः, ४) अन्त्यानुप्रासः, ५) लाटानुप्रासः च इति। पञ्चविधानाम् अनुप्रासालङ्काराणां लक्षणपूर्वकं उदाहरणानि प्रोक्तानि। वक्रोक्त्यलङ्कारः अपि द्विधा भवति। यथा - १)श्लेषवक्रोक्तिः, २) काकुवक्रोक्तिः चेति। काकुः नाम भिन्नकण्ठध्वनिना कथनम्। श्लेषः नाम श्लिष्टैः पदैः अनेकार्थाभिधाने श्लेष इष्यते। अर्थात् अनेकार्थवाचकं पदं श्लिष्टपदम् अस्ति। एकवारम् उच्चारितं पदम् अनेकार्थस्य वाचकं भवति। अयञ्च श्लेषालङ्कारः अष्टविधः भवति। एवञ्च वाक्ये अलङ्कारः अस्ति चेत् एव तत् काव्यं सुन्दरम् भवति। सौन्दर्यम् एव अलङ्कारः भवति। वामनेन प्रोक्तम् अस्ति - "काव्यं ग्राह्यमलङ्कारात्"इति। यथा लोके अलङ्काराः अङ्गादीनां शोभां वर्धयन्तः शरीरिणम् उपकुर्वन्ति तथैव शास्त्रे अपि अलङ्काराः शब्दार्थानां शोभां वर्धयन्तः रसादीन् उपकुर्वन्ति।

## पाठान्तप्रश्नाः

१. अलङ्कारस्य विषये लघुप्रबन्धं लिखत।
२. अलङ्कारस्य लक्षणं लिखत।
३. अलङ्कारस्य प्रयोजनं लिखत।
४. अलङ्कारस्य प्रभेदान् विलिख्य तत्सम्बन्धिविचारः क्रियताम्।
५. पुनरुक्तवदाभासालङ्कारं वर्णयत।
६. शब्दालङ्कारस्य विषये लघुप्रबन्धं लिखत।
७. अनुप्रासालङ्कारस्य भेदान् प्रदर्श्य तद्विषये लघुप्रबन्धं लिखत।
८. छेकानुप्रासालङ्कारान् वर्णयत।
९. वृत्त्यनुप्रासालङ्कारान् वर्णयत।
१०. श्रुत्यनुप्रासालङ्कारान् वर्णयत।
११. अन्त्यानुप्रासालङ्कारान् वर्णयत।
१२. लाटानुप्रासालङ्कारान् वर्णयत।
१३. यमकालङ्कारान् प्रतिपादयत।
१४. वक्रोक्त्यलङ्कारान् वर्णयत।

## पाठगतप्रश्नानाम् उत्तराणि

१. अलङ्कृतिः अलङ्कारः।
२. अलङ्क्रियते अनेन।
३. काव्यशोभाकरान् धर्मान् अलंकारान् प्रचक्षते।
४. द्विविधः।

५. अनुप्रासालङ्कारः।

६. उपमालङ्कारः।

७. भामहस्य।

८. अलङ्कारः।

९. उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः॥

१०. शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्॥

११. शक्यम्।

१२. पुनरुक्तवदाभासालङ्कारः।

१३. आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥

१४. शक्यं नास्ति।

१५. अनुप्रासालङ्कारः।

१६. वाक्यध्वनिः भवति।

१७. अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।

१८. पञ्चविधः।

१९. "छेको व्यञ्जनसंघस्य सकृत्साम्यमनेकधा" इति।

२०. रसिकः।

२१. अनेकस्यैकधा साम्यम् असकृद्वापि अनेकधा।
एकस्य सकृद् अप्येष वृत्त्यनुप्रास उच्यते॥ इति

२२. उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके।
सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते॥

२३. व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु।
आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥

२४. शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः।
लाटानुप्रास इत्युक्तः॥

२५. सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्तिः यमकं विनिगद्यते॥

२६. अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेत् यदि।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिः ततो द्विधा॥

२७. द्विविधा।

२८. श्लिष्टैः पदैः अनेकार्थाभिधाने श्लेष इष्यते।

२९. अष्टविधः।

॥ इति पञ्चविंशः पाठः ॥

# २६

# अर्थालङ्कारः

## प्रस्तावना

पूर्वतने पाठे शब्दालङ्कारः निरूपितः आसीत्। सम्प्रति अर्थालङ्कारं निरूपयितुं प्रकरणम् इदम् आरभ्यते। अस्माभिः पूर्वतने पाठे सौन्दर्यम् अलङ्कारः इति तु पठितम्। कः अलंक्रियते। शब्दः अर्थो वा। तदद्वारा काव्यात्मा रसः। अलंकारः कुत्र स्थितः। शब्दार्थयोः। सालंकारस्य काव्यता इति कुन्तकः। अतो यथा केयूरहारादयः शरीरसौन्दर्यजननद्वारा। पर्यन्ते आत्मनः सौन्दर्यं वर्धयन्ति तथा काव्यशरीरभूतयोः शब्दार्थयोः सौन्दर्यमुत्पादयन्तः तद्द्वारा काव्यात्मानं रसं परिपुष्णन्ति। परमार्थतः उक्तिवैचित्र्यं अलंकारः। किमर्थम् उक्तिवैचित्र्यम्। काव्ये लोकोत्तररमणीयत्वनिष्पत्तये। अथवा रसपोषणायेति स्वीकुर्वन्तु। शब्दवैचित्र्येण अर्थवैचित्र्येण च अलंकारः द्विविधः इति नयः। उभयालंकारः तृतीयोऽपि भवतीति केचित्। अर्थालङ्कारे अर्थस्य प्राधान्यं दृश्यते। यतो हि अर्थवशात् एव काव्ये लोकोत्तरचमत्कारः उत्पद्यते। तेन काव्यम् इदम् अत्यन्तं रमणीयं भवति। तत्रापि बहुविधः अर्थालङ्कारः विद्यते। तेषु अर्थालङ्कारेषु सादृश्यघटितस्य उपमालङ्कारस्य आदौ विचारः क्रियते। यतो हि अर्थालङ्कारेषु सादृश्यमूलकस्य अलङ्कारस्य च प्राधान्यात् तेषाम् अपि उपजीव्यत्वेन प्रथमम् उपमालङ्कारम् कथयति इति विश्वनाथमतम्। पुनश्च उपमालङ्कारः विशेषसौन्दर्यजनकः अस्ति। साहित्यादिषु उपमालङ्कारस्य बहु प्रयोगः अस्ति। पुनश्च उपमालङ्कारः अत्यन्तं प्राचीनः भवति। अत एव उपमालङ्कारं प्रथमं वर्णयित्वा ततः अन्येषाम् अर्थालङ्काराणां विवरणं कुर्मः।

## उद्देश्यानि

अमुं पाठं पठित्वा भवान् भवती वा -

- अर्थालङ्कारस्य लक्षणं ज्ञातुं प्रभवेत्।
- अर्थालङ्कारस्य उदाहरणानि ज्ञातुं प्रभवेत्।
- अर्थालङ्कारस्य वैशिष्ट्यानि ज्ञातुं प्रभवेत्।
- उपमालङ्कारस्य सुविस्तरं ज्ञानं प्राप्तुं शक्नुयात्।
- श्लोकादौ अर्थालङ्कारस्य निर्णयं कर्तुं शक्नुयात्।
- स्वयमपि अर्थालङ्कारेण श्लोकनिर्माणं कर्तुं योग्यो भवेत्।
- उदाहरणे अर्थालङ्कारस्य लक्षणसमन्वयः कथं कार्यः इति ज्ञातुं प्रभवेत्।



## २६.१) अर्थालङ्कारः

अर्थचमत्कृतिम् अवलम्ब्य स्वीक्रियते अर्थालङ्कारः। अर्थात् यस्मिन् अलङ्कारे अर्थम् आश्रित्य काचित् चमत्कृतिः भवति चेत् स अर्थालङ्कारः इति कथ्यते। अर्थालङ्कारे समार्थकशब्दः परिवर्त्यते चेत् अपि अलङ्कारः तथैव स्थिरतया तिष्ठति। अर्थात् अर्थालङ्कारे समार्थकस्य शब्दस्य प्रयोगः शक्यः अस्ति। परन्तु अर्थालङ्कारे अर्थस्य एव प्राधान्यता तिष्ठति। अर्थालङ्कारे अर्थस्य तु परिवर्तनं कदापि न शक्यम् अस्ति। उपमारूपकादयः अर्थालङ्काराः भवन्ति।

वैशिष्ट्यानि - अत्र अर्थालङ्कारस्य वैशिष्ट्यानि कथ्यन्ते। तथाहि -

१. अर्थालङ्कारे समार्थकशब्दस्य प्रयोगः शक्यः अस्ति।
२. अर्थालङ्कारे शब्दपरिवर्तनं शक्यम् अस्ति।
३. अर्थालङ्कारे अर्थपरिवर्तनं शक्यम् न अस्ति।
४. अर्थालङ्कारस्य उदाहरणं भवति -उपमारूपकादयः।

## २६.२) उपमालङ्कारः

साहित्यदर्पणनामके ग्रन्थे ग्रन्थकारः विश्वनाथः आदौ उपमालङ्कारं विवृणोति, अतिप्राचीनत्वात् प्रचुरप्रयोगात् च। उपमालङ्कारस्य लक्षणं प्राह-

"साम्यं वाच्यमवैधर्म्यं वाक्यैक्य (ये) उपमा द्वयोः"॥ इति।

**अन्वयः** - वाक्यैक्ये द्वयोः अवैधर्म्यं वाच्यं साम्यम् उपमा अलङ्कारः।

**शब्दार्थः** - वाक्यैक्ये - एकस्मिन् वाक्ये, द्वयोः - उपमानोपमेययोः, अवैधर्म्यम् - विरुद्धधर्मरहितम्, वाच्यम् - कथितम्, साम्यम् - सादृश्यम्, उपमा - उपमालङ्कारः।

**सामान्यार्थः** - विजातीयवस्तुनोः विरुद्धधर्मम् अनुक्त्वा यदि गुणक्रियागतसादृश्यम् इवादिशब्देन प्रतिपादितं स्यात्, स उपमालङ्कारः भवति। साधारणतया द्वयोः वस्तुनोः मध्ये साधर्म्यं वैधर्म्यं च तिष्ठति। द्वयोः वस्तुनोः वैधर्म्यम् अनुक्त्वा इवादिशब्देन सादृश्यं कथ्यते। तत् च सादृश्यं गुणक्रियादिगतं भवति। अर्थात् उपमानोपमेययोः विजातीयवस्तुनोः मध्ये कस्यचित् सादृश्यस्य कल्पना क्रियते। तत्र उपमालङ्कारः भवति। एवञ्च इवादिशब्देन सादृश्यस्य स्पष्टतया प्रतीतिः भवति। द्वयोः वस्तुनोः मध्ये विरुद्धस्य धर्मस्य उल्लेखः न स्यात्। साम्यं साधारणधर्मसम्बन्धरूपसादृश्यम् उपमा नाम अलङ्कारः इति। उपमानोपमेयरूपेण कल्पितयोः द्वयोः पदार्थयोः समानधर्मेण साधर्म्यं साम्यं वा निरूप्यते। साम्यं साधर्म्यं गुणक्रियादिरूपम्। उपमानोपमेयोभयगतः धर्मः सधर्मः इति।

**उदाहरणे लक्षणसमन्वयः** - चन्द्र इव मुखं सुन्दरम् इति उदाहरणम् अस्ति। चन्द्रः मुखं च इति सम्पूर्णं भिन्नं वस्तुद्वयम् अस्ति। सौन्दर्यत्वम् आह्लादकत्वं च चन्द्रे मुखे च वर्तते। सौन्दर्यत्वादिगुणेन चन्द्रमुखयोः सादृश्यम् उक्तम् अस्ति। पुनश्च इवादिशब्देन चन्द्रमुखयोः सादृश्यं स्पष्टम् उक्तम् अस्ति इति लक्षणसमन्वयः। अतः प्रकृतवाक्ये उपमालङ्कारः विद्यते।

स च उपमालङ्कारः द्विविधः भवति। यथा - १) पूर्णोपमा, २) लुप्तोपमा।

## २६.२.१) पूर्णोपमा

लक्षणम् - पूर्णोपमायाः लक्षणम् आह-

"सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च।

उपमेयं चोपमानं भवेत् वाच्यम्"॥ इति।

**अन्वयः** - यदि सामान्यधर्मः औपम्यवाचिशब्दः उपमेयं उपमानं च भवेत् सा पूर्णा उपमा इति वाच्यम्।

**सामान्यार्थः** - यस्मिन् उपमालङ्कारे सामान्यधर्मः, औपम्यवाचिशब्दः, उपमेयम्, उपमानम् भवेत् चेत् सा पूर्णोपमा इति वक्तव्यम्। पूर्णोपमायाः चत्वारि अङ्गानि सन्ति। तानि च – १) उपमेयम्, २) उपमानम्, ३) साधारणधर्मः, ४) सादृश्यवाचकशब्दः।

**उदाहरणे लक्षणसमन्वयः** - पूर्णोपमायाः लक्षणं भवति- कमलम् इव मुखं मनोज्ञम्। अर्थात् पद्मसदृशं सुन्दरं मुखम् इति वाक्यार्थः। अत्र उपमेये उपमाने च मनोज्ञत्वधर्मः विद्यते। अत एव मनोज्ञं साधारणधर्मः अस्ति। पुनश्च इवशब्देन कमलमुखयोः सादृश्यं स्पष्टतया प्रतीतिः भवति। अतः इवशब्दः औपम्यवाचकशब्दः। मुखम् उपमीयते (सदृशीक्रियते)। अतः मुखम् उपमेयम्। उपमीयते (सदृशीक्रियते) येन (कमलेन)। अतः कमलम् उपमानम् अस्ति। अस्मिन् अलङ्कारे चतुर्णाम् स्थितिः वर्तते। अत एव पूर्णोपमा इति उच्यते।

पूर्णोपमायाः पुनः द्विविधः भेदः अस्ति। ते च श्रौती आर्थी इति।

## २६.२.२) लुप्तोपमा

लुप्ता उपमा यत्र सा लुप्तोपमा। अत्र उपमाशब्देन उपमाघटकपदार्थानां (उपमानोपमेयादीनाम्) ग्रहणं भवति। लुप्तः नाम अनुल्लिखितः। चतुर्षु उपमाघटकपदार्थेषु एकस्य द्वयोः त्रयाणां वा अनुल्लेखः स्यात्। लुप्तोपमायाः लक्षणम् -

"लुप्ता सामान्यधर्मादिः एकस्य यदि वा द्वयोः।

त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत्॥"इति।

**अन्वयः** - यदि सामान्यधर्मादिः एकस्य द्वयोः त्रयाणां वा अनुपादाने लुप्ता। सापि पूर्ववत् श्रौत्यार्थी

**सामान्यार्थः** - सामान्यधर्मः, उपमेयम्, उपमानम्, औपम्यवाचकशब्दः इति एतेषु एकस्य द्वयोः त्रयाणां वा अनुपादानं भवति चेत् सा लुप्तोपमा इति कथ्यते। अर्थात् उपमायाः चतुर्ष्वंगेषु कस्यापि एकस्य, द्वयोः उत वा त्रयाणां अंगानां वा लोपः यत्र भवति चेत् सा लुप्तोपमा इति मन्तव्यम्। सा लुप्तोपमा द्विविधा भवति। ते च श्रौती, आर्थी इति। पूर्ववत् इत्यस्य अर्थस्तु पूर्णोपमावत् लुप्तोपमा अपि श्रौत्यार्थीभेदेन द्विविधा इति।



**उदाहरणे लक्षणसमन्वयः** - मुखं चन्द्र इव इति लुप्तोपमायाः उदाहरणम् अस्ति। यतो हि प्रकृते मुखचन्द्रयोः सादृश्ये मनोज्ञत्वम् एव कारणम्। उभयत्र मनोज्ञत्वम् अस्ति। प्रकृतोदाहरणे मनोज्ञत्वरूपः साधारणधर्मः नास्ति। अतः लुप्तोपमायाः उदाहरणम्। चन्द्र इव मनोज्ञम् इति वाक्ये मुखस्य उल्लेखः नास्ति। मुखम् उपमीयते। अतः उपमेयं मुखम्। प्रकृतवाक्ये उपमेयस्य अनुल्लेखः वर्तते। अतः लुप्तोपमायाः उदाहरणम् इदम् अस्ति।

## २६.३) अनन्वयालङ्कारः

लक्षणम् - साहित्यदर्पणे अनन्वयालङ्कारस्य लक्षणं कथयति -

“उपमानोपमेयत्वम् एकस्यैव तु अनन्वयः”इति।

**सामान्यार्थः** - एकम् एव वस्तु युगपत् उपमेयत्वेन उपमानत्वेन च कल्पितं भवति चेत् स अनन्वयालङ्कारः भवति। अर्थात् उपमेयोपमानभावः एकवाक्यगतो भवति चेत् अनन्वयालङ्कारः भवति। यदि अनेकवाक्यगतः उपमेयोपमानभावः भवति तर्हि रसनोपमा उपमेयोपमा वा भवति। यथा - “चन्द्रायते शुक्लरुचापि हंसः” इति स्थले रसनोपमा वर्तते। पुनश्च "कमलेव मतिः मतिरिव कमला” इति स्थले उपमेयोपमा भवति। अत एव अनन्वयः एकवाक्यगतविषयः भवति इति तु अर्थतः सिद्धम्।

**उदाहरणे लक्षणसमन्वयः** - अत्र अनन्वयालङ्कारस्य उदाहरणं कथयति -

“राजीवमिव राजीवं जलं जलमिवाजनि।

चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे॥” इति।

**श्लोकार्थः** - शरतः आविर्भावे कमलं कमलवत्, जलं जलवत्, चन्द्रः चन्द्रवत्, निर्मलभावं धारयति।

राजीवम्, जलम्, चन्द्रश्च इति त्रीणि एव युगपत् उपमेयानि उपमानानि च भवन्ति। अर्थात् राजीवादिकम् उपमानम् उपमेयञ्च उभयम् अस्ति। अत्र राजीवादिरूपे एकस्मिन् वस्तुनि उपमेयोपमानभावकल्पना वर्तते इति लक्षणसमन्वयः। अनन्वयालङ्कारः सादृश्यमूलकालङ्कारः भवति। अयम् एव एकः अलङ्कारः वाक्यस्य सादृश्यमूलकः अलङ्कारः।

सादृश्यम् सर्वदा द्वयोः वस्तुनोः मध्ये सम्भवम् अस्ति। प्रकृते अनन्वयालङ्कारे एकम् एव वस्तु उपमानम् उपमेयञ्च अस्ति। अनन्वये द्वयोः वस्तुनोः अभावात् कथं सादृश्यमूलकः अलङ्कारः भवति।

अत्र समाधानं प्रदीयते यत् यद्यपि वस्तुदृष्ट्या उपमेयस्य उपमानत्वम्, उपमानस्य उपमेयत्वं न कदापि सम्भवम् अस्ति। तथापि कविकल्पनायां तत् सम्भवम् अस्ति। दृष्टिभेदे एकम् एव वस्तु एकवारम् उपमानत्वेन एकवारम् उपमेयत्वेन च ग्रहणं भवति।

## २६.४) रूपकालङ्कारः

लक्षणम् - अलङ्कारनभसि रूपकालङ्कारः अत्यन्तं सुप्रसिद्धः वर्तते। कविराजः विश्वनाथः स्वकीये साहित्यदर्पणनामके ग्रन्थे रूपकालङ्कारस्य लक्षणं कथयति - "रूपकं रूपितारोपे विषये निरपह्नवे" इति।

**अन्वयः** - निरपह्नवे विषये रूपितारोपे रूपकं (अलङ्कारः) स्यात्।

**शब्दार्थः** - निरपह्नवे विषये - निषेधरहिते विषये, रूपितारोपे - उपमानपदार्थस्य तादात्म्ये अभेदे वा, रूपकम् - रूपकालङ्कारः स्यात्।

**सामान्यार्थः** - निषेधरहिते विषये उपमेये रूपितस्य उपमानपदार्थस्य आरोपः (अभेदतत्त्वेन प्रतीतिः) एव रूपकालङ्कारः। तात्पर्यं भवति - निषेधरहिते उपमेये उपमानेन साकम् उपमानपदार्थस्य अभेदकल्पना, स रूपकालङ्कारः भवति। उपमेयस्य उपमानात्मना प्रतीतिः भवति। उपमेयस्य उपमानेन साकम् अभेदप्रतीतिः जायते। अर्थात् विषयस्य उपरि विषयिणः अभेदारोपः क्रियते। अर्थात् उपमेयस्य उपरि उपमानस्य अभेदारोपः भवति। यथावस्थिते उपमेये उपमानस्य अभेदारोपः रूपकम् इत्यर्थः। रूपकम् उपमानोपमेययोः अभेदारोपं करोति। रूपयति अर्थात् अभेदारोपं करोति इति रूपकम्। विजातीयवस्तुनोः अत्यन्तं सादृश्यवशात् अभेदकल्पना सम्भवति। अत्र अत्यन्तं सादृश्यवशात् अभेदकल्पना जायते।

**उदाहरणेन साकं लक्षणसमन्वयः** - मुखचन्द्रः भाति इति रूपकालङ्कारस्य उदाहरणं भवति। अत्र उपमेयः निषेधरहितः अस्ति। उपमेयस्य (मुखस्य) उपमानेन (चन्द्रेण) साकम् अभेदकल्पना क्रियते। अत्र उपमेयस्य मुखस्य उपमानचन्द्रात्मना (चन्द्रत्वेन) प्रतीतिः भवति। मुखेन साकं चन्द्रस्य अभेदारोपः क्रियते। एतेन चन्द्राभिन्नं मुखं भाति। अत्र उपमेयस्य चन्द्रस्य उपमानेन चन्द्रेण साकम् अभेदारोपः भवति। प्रकृते अपि मुखचन्द्रयोः अत्यन्तं सादृश्यम् अस्ति। अत एव मुखचन्द्रयोः अभेदकल्पना जायते। अत एव रूपकालङ्कारः इति उच्यते।

## पाठगतप्रश्नाः-४

अत्र केचित् अधः प्रश्नाः प्रदीयन्ते -

१. अर्थालङ्कारः कः।

२. अर्थालङ्कारस्य एकम् उदाहरणं कथयतु।

३. अर्थालङ्कारस्य एकं वैशिष्ट्यं लिखत।

४. उपमालङ्कारस्य लक्षणं लिखत।

५. उपमालङ्कारः कतिविधः।

६. पूर्णोपमायाः लक्षणं लिखत।

७. लुप्तोपमायाः लक्षणं लिखत।

८. अनन्वयालङ्कारस्य लक्षणं लिखत।

९. रूपकालङ्कारस्य लक्षणं लिखत।

१०. पूर्णोपमायाः चत्वारि अङ्गानि कानि सन्ति।

११. लुप्तोपमा कतिविधा भवति।

## २६.५) उत्प्रेक्षालङ्कारः

सादृश्यमूलकः अलङ्कारः अयम्। काव्यमार्गे उत्पेक्षालङ्कारः कविजनस्य सकाशे अत्यन्तं प्रियः भवति। अलङ्कारशेखरे प्रोक्तम् - उत्प्रेक्षालङ्कारः एव श्रेष्ठः अलङ्कारः भवति। पुनश्च नववध्वाः हास्यवत् मनोरमः अयम् उत्प्रेक्षालङ्कारः।

लक्षणम् - साहित्यदर्पणे उत्प्रेक्षालङ्कारस्य लक्षणं प्रोक्तम् -

"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना"इति।

अन्वयः - प्रकृतस्य परात्मना सम्भावना उत्प्रेक्षा भवेत्।

**शब्दार्थः** - प्रकृतस्य – उपमेयपदार्थस्य, परात्मना - उपमानपदार्थरूपेण, सम्भावना - संशयः, उत्प्रेक्षा - उत्प्रेक्षालङ्कारः स्यात्।

**सामान्यार्थः** - प्रकृतस्य (उपमेयस्य) परात्मना (उपमानात्मना) सम्भावना उत्प्रेक्षालङ्कारः इत्यर्थः। उपमेयस्य उपमानतादात्म्येन सम्भावनम् उत्प्रेक्षा इति भावः। अत्यन्तं सादृश्यवशात् उपमेयम् उपमानत्वेन आशङ्कते चेत् उत्प्रेक्षालङ्कारः भवति। उत्प्रेक्षा इत्यत्र उत् इत्यस्य ऊर्ध्वगामिनी, प्रेक्षा इत्यस्य दृष्टिः इत्यर्थः। यस्य कस्यचित् वस्तुनः भावनाकाले भावनाकारिणः दृष्टिः अत्यन्तम् ऊर्द्धगामिनी भवति। अत एव उत्प्रेक्षालङ्कारः इति नाम।

उपमेयोपमानयोः अत्यन्तं सादृश्यम् उत्प्रेक्षाघटकम् अस्ति। तथापि उपमेयोपमानयोः भेदज्ञानं तिरोहितं न भवति। भेदज्ञाने सत्यपि अभेदतया वर्णयितुम् अधिकतया कविः इच्छति। सम्भावनाशब्दस्य संशयः इति अर्थः भवति। तथापि शुद्धसंशयः न गृह्यते। स्थाणुर्वा पुरुषो वा इति ज्ञानं तु शुद्धसंशयात्मकं ज्ञानम्। अत्र स्थाणुरेव अयम् इति निश्चयात्मकं ज्ञानं तु सम्भावना पदवाच्या भवति।

उत्प्रेक्षालङ्कारस्य वैशिष्ट्यम्-

१. उपमावत् उत्प्रेक्षालङ्कारे अपि कविकल्पनायाः एका वास्तवभित्तिः विद्यते। यथा - तस्याः मुखं भाति पूर्णचन्द्र इवापरः"। इति।

२. उपमावत् उत्प्रेक्षालङ्कारे उपमानोपमेयभावः विद्यते। परन्तु अत्यन्तं सादृश्यवशात् उपमेयम् उपमानत्वेन शङ्कते। एतादृशं चिन्तनं भ्रमात्मकम् अस्ति, भ्रमात्मकं नास्ति इति उभयम् अपि वक्तुं शक्यते।

३. भ्रमः अयम् आहार्यः (ऐच्छिकः)। तस्मात् नूनं तव मुखं चन्द्रः इति स्थले नायकस्य ज्ञानं विद्यते यत् मुखं चन्द्रः च समानं वस्तु नास्ति।

४. सादृश्यमूलकः अयम् अलङ्कारः विद्यते।

**उदाहरणे लक्षणसमन्वयः** - अत्र उत्प्रेक्षालङ्कारस्य उदाहरणम् -

"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।

गुणा गुणानुवन्धित्वात् तस्य सप्रसवा इव॥" इति।

**श्लोकार्थः** - ज्ञाने सत्यपि मौनं तिष्ठति, शक्तौ सत्याम् अपि क्षमा विद्यते, त्यागे सत्यपि गर्वभावः नास्ति। रघुवंशस्य नृपे परस्परविरोधिनः गुणाः एकत्र सहावस्थानं करोति। परस्परविरुद्धगुणाः सहोदरवत् तिष्ठन्ति।

अस्मिन् श्लोके ज्ञानादिगुणाः उपमेयं भवन्ति। सप्रसवाः उपमानं भवन्ति। ज्ञानादिगुणाः सप्रसवारूपेण उत्प्रेक्षन्ते। इवशब्देन तच्च सादृश्यम् अधिकतया स्फुट्यते। उपमेयम् (ज्ञानादिगुणान्) उपमानत्वेन (सप्रसवात्वेन) आशङ्कते। अत्यन्तं सादृश्यवशात् प्रकृतस्य (उपमेयस्य) ज्ञानादिगुणानां परात्मना (उपमानात्मना) सप्रसवात्मना सम्भावना क्रियते। अतः उत्प्रेक्षालङ्कारः विद्यते इति लक्षणसमन्वयः।

## २६.६) अपह्नुतिः

अपह्नुतिः सादृश्यमूलकः अलङ्कारः अस्ति। उपमेयोपमानविषयकः अलङ्कारः अयम्। अपह्नवः इत्यस्य गोपनं करोति इत्यर्थः। आरोपविषयस्य (उपमेयस्य) अपह्नवनकरणम् भवति। अत एव अपह्नुत्यलङ्कारः इति कथ्यते।

लक्षणम् - कविराजः विश्वनाथः स्वकीये साहित्यदर्पणनामके ग्रन्थे अपह्नुत्यलङ्कारस्य लक्षणं प्राह-

"प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः॥"इति।

अन्वयः - प्रकृतं प्रतिषिध्य अन्यस्थापनं स्यात् अपह्नुतिः।

**शब्दार्थः** - प्रकृतम् - उपमेयम्, प्रतिषिध्य – साक्षात् परोक्षात् वा निषिध्य, अन्यस्य – उपमानस्य, स्थापनम् - प्रतिष्ठापनम्, अपह्नुतिः - अपह्नुत्यलङ्कारः, स्यात् - भवेत्।

**सामान्यार्थः** - उपमेयस्य निषेधपूर्वकम् उपमेयस्य उपमानतादात्म्येन उपपादनम् अपह्नुत्यलङ्कारः इत्यर्थः। प्रकृतस्य (उपमेयस्य) प्रतिषेधं कृत्वा अन्यस्य (उपमानस्य) स्थापनम् (आरोपकरणम्) अपह्नुत्यलङ्कारः इत्यर्थः। अत्र रुद्रटस्य मतेन अपह्नुत्यलङ्कारः चर्च्यते। उपमेयनिषेधपूर्वकम् उपमेये उपमानस्य सत्यरूपेण स्थापनं भवति। अस्य तु कारणं उपमानोपमेययोः अत्यन्तं सादृश्यम्। रुद्रटेन प्रोक्तम् - "अतिसाम्यात् उपमेयं यस्यामसदेव कथ्यते सदपि"॥ इति। वामनेन प्रोक्तम् - "समेन वस्तुना अन्यापलापोऽपह्नुतिः॥"इति। अर्थात् निषेध्यस्थाप्यवस्तुद्वययोः मध्ये सादृश्यम्

अत्यन्तम् आवश्यकम्। उपमेयस्य निषेधः द्विधा भवति। १) आदौ निषेधः पश्चात् आरोपः, २) आदौ आरोपः अनन्तरं निषेधः इति।

वैशिष्ट्यम् -

१. उपमेयस्य वस्तुनः निषेधः भवति।
२. उपमेयस्य स्थाने उपमानस्य स्थापनं भवति।
३. उपमेयस्य निषेधः उपमानस्य स्थापनम् (आहार्यः) ऐच्छिकः विद्यते।
४. अपह्नुत्यलङ्कारः सादृश्यमूलकः अलङ्कारः अस्ति।
५. उदाहरणे लक्षणसमन्वयः - उपमेयस्य निषेधः द्विधा भवति। १) आदौ निषेधः पश्चात् आरोपः, २) आदौ आरोपः अनन्तरं निषेधः इति।

**उदाहरणे लक्षणसमन्वयः** - अत्र अपह्नुवपूर्वकम् आरोपस्य उदाहरणं प्रोच्यते -

"नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः॥"

**श्लोकार्थः** - इदं गगनं नास्ति, अम्बोः राशिः अस्ति। एतानि नक्षत्राणि न सन्ति, एते तु नवफेनसमूहाः। नायं चन्द्रः वर्तते, अपि तु कुण्डलितः फणिः। नायं चन्द्रस्य कलङ्कः, अपि तु शयितः कृष्णः इति।

अस्मिन् श्लोके नभोमण्डलम्, तारा, शशी, कलङ्कः च इति एते उपमेयाः सन्ति। अत्र अम्बुराशिः, नवफेनभङ्गः, कुण्डलितः फणीन्द्रः, मुरारिः इति एतानि उपमानानि सन्ति। अत्र श्लोके आकाशम्, शशी, कलङ्कः इति सर्वं सत्यम् अस्ति। किन्तु आदौ नञा प्रकृतं गगनादिकं निषिध्य ततः परम् अप्रकृतस्य सागरस्य, फेनसमूहस्य, फणीन्द्रस्य च सत्यरूपेण स्थापनं क्रियते। अत्र निषेधस्थापनयोः हेतुः सादृश्यम्। नक्षत्रशोभितेन गगनेन साकं फेनराशिसमूहस्य अत्यन्तं सादृश्यम् अस्ति। नञ् - शब्देन उपमेयस्य निषेधपूर्वकम् उपमानस्य आरोपः क्रियते। अतः प्रकृते अपह्नुवपूर्वकम् आरोपरूपस्य अपह्नुत्यलङ्कारस्य वर्णनं क्रियते।

आरोपपूर्वकम् अपह्नुतेः दृष्टान्तः प्रदीयते। अस्य उदाहरणं भवति -

"विराजति व्योमवपुः पयोधिस्तारामयास्तत्र च फेनभङ्गाः।
फणीश्वरोऽयं द्विजराजमूर्त्तिर्नवाम्बुदश्रीर्ननु तस्य लक्ष्म॥"इति।

नभःशरीरं सिन्धुः शोभमान्, तस्मिन् सिन्धौ नक्षत्ररूपी फेनसमूहः दृश्यते। अत्र वपुःशब्देन मयट्-प्रत्ययेन च यथाक्रमं व्योमस्य नक्षत्रस्य (उपमेयस्य) च निषेधं करोति। परन्तु निषेधवाचकं नञादिकं तु साक्षात् नास्ति। वस्तुतस्तु गगने नक्षत्रे च समुद्रस्य फेनसमूहस्य आरोपः क्रियते। स च निषेधः गगनादीनां निषेधं विना न कदापि सम्भवति। अत एव प्रकृते आदौ आरोपः ततः निषेधः अस्ति। अत्रापि तथा आरोपे सादृश्यम् एव कारणम्। अत एव आरोपपूर्वकम् अपह्नवमूलकम् अपह्नुत्यलङ्कारः वर्णितः।

## २६.७) दृष्टान्तालङ्कारः

दृष्टान्तालङ्कारः तु बिम्बप्रतिबिम्बभावमूलकः अलङ्कारः। साधर्म्यवैधर्म्यभेदात् दृष्टान्तालंकारः अपि द्विविधं भवति।

**लक्षणम्** - साहित्यदर्पणे दृष्टान्तालङ्कारस्य लक्षणं प्राह-

"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्॥"इति।

**अन्वयः** - सधर्मस्य वस्तुनः प्रतिबिम्बनं दृष्टान्तः।

**शब्दार्थः** - सधर्मस्य – समानधर्मविशिष्टस्य, वस्तुनः - पदार्थस्य, प्रतिबिम्बम् - प्रतिबिम्बभावेन, स्थापनम् दृष्टान्तः अलङ्कारः भवति।

**सामान्यार्थः** - प्रस्तुतस्य समर्थने सदृशस्य वस्तुनः प्रतिबिम्बरूपेण उपस्थापनं दृष्टान्तालङ्कारः। दृष्टः अन्तः समर्थनीये समर्थकस्य स्वरूपं सादृश्यं यस्मिन् स दृष्टान्तः अलङ्कारः इत्यर्थः। अर्थात् समर्थनीये वस्तुनि समर्थकस्य वस्तुनः यत् सादृश्यं तत् दृष्टान्तालङ्कारः इत्यर्थः। एकं दृष्टान्तवाक्यम्। अपरं दार्ष्टान्तिकं वाक्यम्। प्रथमं समर्थकं वाक्यम्। अपरं समर्थ्यं वाक्यम्। अत्रापि बिम्बप्रतिबिम्बभावयोः मध्ये सादृश्यम् एव नियामकम्। पुनश्च अत्र सादृश्यं वाच्यलभ्यं न भवेत्। सादृश्यं तात्पर्येण गम्यम्। प्रणिधानगम्यं सादृश्यं बिम्बप्रतिबिम्बभावः एव। तथाहि - प्रतिबिम्बनं प्रणिधानगम्यसाम्यत्वम् इति। प्रतिबिम्बम् बिम्बात् भिन्नं भवति। तथापि प्रतिबिम्बं बिम्बसदृशम् एव भवति।

**वैशिष्ट्यानि** - अत्र दृष्टान्तालङ्कारस्य वैशिष्ट्यानि प्रोच्यन्ते।

१. स्वतन्त्रं वाक्यद्वयम् भवेत्।
२. एकस्य वाक्यस्य समर्थने अपरं वाक्यम् उपयोगि स्यात्। तयोः उपमेयोपमानभावसम्बन्धः अस्ति।
३. उपमानस्य उपमेयस्य च धर्मः पृथक्तया कथितो भवेत्।
४. धर्माणां मध्ये सादृश्यं स्यात्।
५. पुनश्च सादृश्यं वाच्यं न भवति। अपि तु सादृश्यं तात्पर्यगम्यं भवति।

**उदाहरणे लक्षणसमन्वयः** - अत्र दृष्टान्तालङ्कारस्य उदाहरणं प्राह दर्पणकारः साहित्यदर्पणे -

"अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।

अनधिगतपरिमलापि हि हरति दृशं मालतीमाला॥"इति।

**सामान्यार्थः** - अविदितगुणाऽपि - अर्थबोधरहिता अपि, भणितिः - वाणी, वसति - प्रकटयति, दृशं - नेत्रम्, हरति - आकर्षति। रसभासादिकाव्यगुणानाम् अविद्यमाने अपि उत्तमकवेः काव्यश्रवणेन श्रोतुः कर्णे मधुरधारां वर्षति। यथा- सौरभस्य आघ्राणं न भवति चेदपि मालतीपुष्पस्य माला नेत्रं हरति।

पद्ये अस्मिन् स्वतन्त्रं वाक्यद्वयम् अस्ति। किन्तु अर्थानुसन्धानकाले अवगम्यते यत् द्वितीयवाक्यं प्रथमवाक्यस्य समर्थकम् अस्ति। वाक्यद्वये वमनम् हरणञ्च इति साधारणधर्मद्वयम्। अत्र मधुधारावमनम् नेत्रहरणञ्च अभिन्नं नास्ति। तथापि उभयत्र आनन्दजनकत्वरूपं भावगतसादृश्यम् अस्ति। आनन्दजनकत्वरूपं सादृश्यं तात्पर्यगम्यम् अस्ति। रसभासादिकाव्यगुणानाम् अविद्यमाने अपि उत्तमकवेः वाणी मधुरधारां वर्षति इति प्रथमवाक्यस्य वर्णनाय अनधिगतपरिमालायाः अपि मालतीमालायाः नयनलोभनीयत्वम् इति अपरवाक्यस्य वर्णना क्रियते। अत्र बिम्बप्रतिबिम्बभावसम्बन्धः विद्यते। अत्रापि सादृश्यवशात् बिम्बप्रतिबिम्बभावः भवति इति दृष्टान्तालङ्कारस्य लक्षणसमन्वयः अस्ति।

## पाठगतप्रश्नाः-२

अत्र केचित् प्रश्नाः अधः प्रदीयन्ते -

१२. उत्प्रेक्षालङ्कारः कीदृशः अलङ्कारः।

१३. उत्प्रेक्षालङ्कारस्य लक्षणं लिखतु।

१४. उत्प्रक्षालङ्कारस्य एकं वैशिष्ट्यं लिखतु।

१५. अपह्नुत्यलङ्कारस्य एकं वैशिष्ट्यं लिखतु।

१६. अपह्नुत्यलङ्कारस्य लक्षणं लिखत।

१७. अपह्नुत्यलङ्कारे उपमेयस्य निषेधः कतिधा भवति।

१८. दृष्टान्तालङ्कारस्य एकं वैशिष्ट्यं लिखतु।

१९. दृष्टान्तालङ्कारस्य लक्षणं लिखतु।

## २६.८) समासोक्तिः

**लक्षणम्** - कविराजः विश्वनाथः साहित्यदर्पणनामके ग्रन्थे समासोक्त्यलङ्कारस्य लक्षणं प्राह -

"समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः।

व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥"इति।

**अन्वयः** - समैः कार्यलिङ्गविशेषणैः प्रस्तुते अन्यस्य वस्तुनः यत्र व्यवहारसमारोपः सा समासोक्तिः। कार्याणि च लिङ्गानि च विशेषणानि च तैः कार्यलिङ्गविशेषणैः इति इतरेतरद्वन्द्वसमासः।

**शब्दार्थः** - समैः - समानैः (प्रस्तुते अप्रस्तुते च तुल्यरूपे विद्यमानम्, तैः), कार्यलिङ्गविशेषणैः - आलिङ्गनादिक्रियया, पुंस्त्वादिलिङ्गेन, नीलत्वादिव्यावर्तकधर्मैः, प्रस्तुते - उपमेयपदार्थे, अप्रस्तुतस्य – उपमानपदार्थस्य, व्यवहारस्य – आचरणस्य, समारोपः - सम्यक्तया आरोपः यत्र भवति, सा समासोक्तिः इति।

**सामान्यार्थः** - समानक्रियाभिः, समानलिङ्गैः, समानविशेषणैः वा उपमेये उपमानस्य व्यवहारसमारोपः भवति चेत् सा समासोक्तिः भवति। समासेन (संक्षेपेन) उक्तिः (अर्थद्वयकथनम्) सा समासोक्तिः। आरोपे सादृश्यम् एव कारणम्। पुनश्च अत्र लिङ्गं क्रिया विशेषणञ्च आश्रित्य सादृश्यं भवति। प्रस्तुतेन साकम् अप्रस्तुतस्य साक्षात् सादृश्यं न विद्यते। वस्तुतस्तु अत्र वाक्ये अप्रस्तुतस्य उल्लेखः न विद्यते। लिङ्गादीनां सादृश्यवशात् अप्रस्तुतस्य प्रतीतिः भवति। केषाञ्चित् मते तु केवलं विशेषणं सदृशस्य आश्रयः भवति। अर्थात् समानविशेषणवशात् उपमेये उपमानस्य व्यवहारसमारोपः भवति। अलङ्कारसर्वस्वकारः कथयति - "श्लिष्टविशेषणैरुपमानधीः समासोक्तिः। "इति। मम्मटः अपि कथयति - "परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः"इति।

**उदाहरणे लक्षणसमन्वयः**- अत्र समासोक्त्यलङ्कारस्य उदाहरणं तावत् -

"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।

अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः॥"इति।

**श्लोकार्थः** - यस्य जयेच्छा पूर्णा न जाता। तादृशस्य नीतिज्ञस्य पुरुषस्य रमणीसम्भोगस्य स्पृहा कथं सम्भवति। सूर्यः अखिलं जगत् अनाक्रम्य सन्ध्यया साकं न मिलति। अत्र सूर्यः प्रस्तुतः, नायकः अप्रस्तुतः अस्ति। सन्ध्या प्रस्तुता, नायिका अप्रस्तुता भवति। अस्मिन् श्लोके सूर्ये नायकस्य सन्ध्यायां नायिकायाः च व्यवहारसमारोपः अस्ति। अस्मिन् समारोपे लिङ्गसाम्यं कारणं भवति। विश्वनाथः कथयति - "अत्र पुंस्त्रीलिङ्गमात्रेण रविसन्ध्ययोः नायकनायिकायाः व्यवहारः॥"इति। अत्र रविः तेजोमात्रं भवति। सन्ध्या कालविशेषः भवति। तथापि रविशब्दस्य पुंलिङ्गवशात् नायकस्य व्यवहारसमारोपः भवति। एवञ्च सन्ध्याशब्दस्य स्त्रीलिंङ्गवशात् नायिकायाः व्यवहारसमारोपः भवति। अत्र दृष्टान्तत्वेन अप्रकृतयोरपि रविसन्ध्ययोः प्रकृताङ्गत्वेन एव प्रकृतत्वम् अवधेयम्।

## २६.९) अतिशयोक्तिः

भरतपरवर्तिनः प्रायः सर्वे एव अतिशयोक्त्यलङ्कारं स्वीकृतवन्तः। अतिशयेन सम्भवातिरेकेण योग्यतातिक्रमेण वा उक्तिः अतिशयोक्तिः। अत्युक्तिः अतिशयोक्तिः इति वाग्भट्टः।

**लक्षणम्** - अत्र दर्पणकारः अतिशयोक्त्यलङ्कारस्य लक्षणं कथितवान् -

"सिद्धत्वेऽध्यवसायस्य अतिशयोक्तिर्निगद्यते" इति।

**अन्वयः** - (प्रकृतस्य परात्मना) अध्यवसायस्य सिद्धत्वे अतिशयोक्तिः निगद्यते।

**शब्दार्थः** - अध्यवसायस्य – प्रकृतेन सह अप्रकृतस्य (यथार्थवस्तुना सह अयथार्थवस्तुना) अभेदप्रतीतेः, सिद्धत्वे - निश्चयात्मके अतिशयोक्तिः - अतिशयोक्त्यलङ्कारः भवति।

**सामान्यार्थः** - विषयेण साकं विषयिणः अभेदप्रतीतेः निश्चयात्मके सति अतिशयोक्त्यलङ्कारः स्यात्। अध्यवसायः नाम अयथार्थवस्तुना यथार्थवस्तुनः निगरणम्। अर्थात् उपमेयस्य निगरणपुरःसरम् उपमानेन सह तस्य अभेदज्ञानम् अध्यवसायः। विश्वनाथः कथयति - "विषयनिगरणेन अभेदप्रतिपत्तिः विषयिणः अध्यवसायः॥" इति। अर्थात् यथार्थवस्तुनः आच्छादनपूर्वकम् अयथार्थवस्तुनः अभेदप्रतीतिः

अतिशयोक्तिः भवति। उत्प्रेक्षालङ्कारे सम्भावना अनिश्चितरूपा। अतिशयोक्तौ कविप्रौढोक्तिवशात् सम्भावना निश्चितरूपा भवति।

**उदाहरणे लक्षणसमन्वयः** - अत्र विश्वनाथः अतिशयोक्त्यलङ्कारस्य उदाहरणं निरूयति-

"कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम्।

कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात्॥"इति।

**श्लोकार्थः** - नायिकायाः मस्तके मयूरपुच्छः, तस्य अधः अष्टमीन्दुखण्डः, तस्य अधः चञ्चलं नीलोत्पलयुगलम्, तस्य अधः तिलकुसुमम्, तस्य एकं प्रवालम् कथम्।

श्लोके "कथम्" इति पदं प्रश्नसूचकं नास्ति। अपि तु कथम् इति पदं सम्भावनासूचकम् अस्ति। अत्र नायिकाकेशकलापभालस्थलनेत्रयुगलनासिकाधरोष्ठानाम् उपमेयानां कलापिकलापादिभिः उपमानैः सह अभेदज्ञानात् अध्यवसायस्य सिद्धत्वम् इति अतिशयोक्तेः उदाहरणम्। केशपाशं मयूरकलापत्वेन, कपालम् अर्धचन्द्रत्वेन, नयनद्वयं नीलोत्पलत्वेन, नासिकाम् तिलकुसुमत्वेन, औष्ठं रक्तप्रवालत्वेन अध्यवसायः कृतः। अर्थात् केशपाशादेः प्रकृतस्य मयूरकलापादिना अप्रकृतेन सह अभेदनिश्चयः भवति। प्रकृते केशादिः उपमेयः कलापादिः उपमानञ्च परस्परं भिन्नम्। तथापि उपमानस्य उत्कटप्राधान्ये उपमेयस्य निगरणजनिता अभेदप्रतीतिः भवति। अतिशयोक्तेः बहवः विभागाः सन्ति। प्रकृते तु अतिशयोक्त्यलङ्कारस्य भेदाः नैव चर्चिताः।

## पाठगतप्रश्नाः-३

२०. समासोक्त्यलङ्कारस्य लक्षणं लिखतु।

२१. समासोक्तिः इत्यस्य अर्थः कः।

२२. मम्मटमतेन समासोक्तेः लक्षणं किम्।

२३. समासोक्त्यलङ्कारे आरोपे किं कारणं भवति।

२४. अतिशयोक्त्यलङ्कारस्य लक्षणं किम्।

२५. वाग्भट्टमतने अतिशयोक्तिः नाम का।

२६. अध्यवसायः नाम कः।

## पाठसारः

अस्मिन् पाठे अर्थालङ्कारः आलोच्यते। अर्थालङ्कारे शब्दपरिवर्तनं शक्यम्। अत्र अर्थवशात् चमत्कृतिः उत्पद्यते। उपमादयः अर्थालङ्कारः भवति। प्रायः सादृश्यमूलकः अलङ्कारः आलोच्यते। विजातीयवस्तुनोः विरुद्धधर्मम् अनुक्त्वा यदि गुणक्रियागतसादृश्यम् इवादिशब्देन प्रतिपादितं स्यात्, स

उपमालङ्कारः भवति। सा च पूर्णोपमा लुप्तोपमा इति भेदात् द्विविधा। ततः अनन्वयालङ्कारं प्रतिपादितवान्। एकम् एव वस्तु युगपत् उपमेयत्वेन उपमानत्वेन च कल्पितं भवति चेत् स अनन्वयालङ्कारः भवति। ततः रूपकालङ्कारम्, दृष्टान्तालङ्कारम्, उत्प्रेक्षालङ्कारम्, अपह्नुत्यलङ्कारान् प्रतिपादितवान्। प्रायः एते सर्वे एव अलङ्काराः सादृश्यमूलकाः सन्ति। रूपकाद्यलङ्काराणाम् उदाहरणपुरःसरं लक्षणानि वैशिष्ट्यानि च प्रोक्तानि। सादृश्ये सति एव एते अलङ्काराः भवन्ति। मम्मटाद्याचार्याणां मतानि अत्र प्रोक्तानि। किन्तु साहित्यदर्पणकारस्य निर्मितानि लक्षणानि पाठे अस्मिन् गृहीतानि सन्ति। काव्यमार्गे अलङ्काराः एव काव्यस्य सौन्दर्यं वर्धयन्ति। काव्ये अलङ्कारस्य विद्यमानात् काव्यम् अत्यन्तं ग्राह्यम् अस्ति। काव्यजगति अन्ये अपि अलङ्काराः सन्ति। परन्तु अस्मिन् पाठे केचित् प्रसिद्धाः अलङ्काराः गृहीताः।

## पाठान्तप्रश्नाः

१. अर्थालङ्कारस्य विषये लघुटिप्पणीं रचयत।

२. उदाहरणपुरःसरम् उपमालङ्कारान् वर्णयत।

३. उपमालङ्कारस्य भेदान् प्रतिपाद्य तेषां परिचयं कारयतु।

४. उदाहरणपुरःसरम् उपमालङ्कारस्य प्रत्येकं भेदान् वर्णयत।

५. उदाहरणपुरःसरम् उत्प्रेक्षालङ्कारं वर्णयत।

६. उदाहरणपुरःसरम् दृष्टान्तालङ्कारं वर्णयत।

७. उत्प्रेक्षालङ्कारस्य वैशिष्ट्यानि लिखन्तु।

८. अपह्नुत्यलङ्कारस्य वैशिष्ट्यानि लिखन्तु।

९. उदाहरणपुरःसरम् अपह्नुत्यलङ्कारं वर्णयत।

१०. उदाहरणपुरःसरम् रूपकालङ्कारान् वर्णयत।

११. उदाहरणपुरःसरम् समासोक्त्यलङ्कारान् वर्णयत।

१२. उदाहरणपुरःसरम् अतिशयोक्त्यलङ्कारान् वर्णयत।

## पाठगतप्रश्नानाम् उत्तराणि

१. यस्मिन् अलङ्कारे अर्थम् आश्रित्य काचित् चमत्कृतिः भवति चेत् स अर्थालङ्कारः।

२. उपमालङ्कारः।

३. अर्थालङ्कारे समार्थकशब्दस्य प्रयोगः शक्यः अस्ति।

४. "साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः"॥ इति।

५. द्विविधः।

६. "सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च।

७. उपमेयं चोपमानं भवेत् वाच्यम्" ॥इति।

८. "लुप्ता सामान्यधर्मादिः एकस्य यदि वा द्वयोः।

९. त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत्॥"इति।

१०. "उपमानोपमेयत्वम् एकस्यैव तु अनन्वयः"इति।

११. "रूपकं रूपितारोपे विषये निरपह्नवे" इति।

१२. १) उपमेयम्, २) उपमानम्, ३) साधारणधर्मः, ४) सादृशवाचकशब्दः।

१३. द्विविधा।

१४. सादृश्यमूलकोपमा।

१५. "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना"इति।

१६. सादृश्यमूलकः अयम् अलङ्कारः विद्यते।

१७. उपमेयस्य निषेधः उपमानस्य निषेधश्च (आहार्यः) ऐच्छिकः विद्यते।

१८. "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्॥"इति।

१९. द्विविधा।

२०. अत्र सादृश्यं वाच्यं न भवति। अपि तु सादृश्यं तात्पर्यगम्यं भवति।

२१. "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्॥"इति।

२२. "समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः।

२३. व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥"इति

२४. समासेन उक्तिः।

२५. परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः"इति।

२६. सादृश्यम्।

२७. "सिद्धत्वेऽध्यवसायस्य अतिशयोक्तिर्निगद्यते"। इति।

२८. अत्युक्तिः।

२९. विषयनिगरणेन अभेदप्रतिपत्तिः विषयिणः अध्यवसायः

## विशेषशब्दावली

### उपमेयम्

तत्र सादृश्यानुयोगि उपमेयम्। उपमीयते यत् तत् उपमेयम्। मि-धातोः परिमापः अर्थः। वर्णनीयः विषयः उपमेयम् अस्ति। यथा चन्द्र इव मुखम्। येन साकं यस्य तुलना क्रियते, तत् उपमेयम्। चन्द्रेण साकं मुखस्य तुलना क्रियते। अतः मुखम् उपमेयम् अस्ति। प्रायः तुलना तु महता साकं लघुनः वस्तुनः

क्रियते। अत्र प्रकृते चन्द्रः अधिकः सुन्दरवान् अस्ति। मुखस्य सुन्दरता तु चन्द्रापेक्षया न्यूनम् अस्ति। अतः लघु वस्तु उपमेयम् अस्ति।

### उपमानम्

तत्र सादृश्यप्रतियोगि उपमानम्। उपमीयते सदृशीक्रियते येन तद् उपमानम्। वर्णनीयस्य उपमेयस्य उपकारकम् उपमानम् अस्ति। यस्य वस्तुनः येन साकं तुलना क्रियते, तत् उपमानम् भवति। यथा - चन्द्र इव मुखम् इति। अत्र तु मुखस्य चन्द्रेण साकं तुलना क्रियते। अतः चन्द्रः उपमानम् अस्ति। प्रायः तुलना तु महता साकं लघुनः वस्तुनः क्रियते। अत्र प्रकृते चन्द्रः अधिकः सुन्दरवान् अस्ति। मुखस्य सुन्दरता तु चन्द्रापेक्षया न्यूनम् अस्ति। अत महत् वस्तु उपमानम् अस्ति।

### साधारणधर्मः

उपमेये उपमाने च सङ्गतधर्मः साधारणधर्मः। अर्थात् उपमेये उपमाने च उभयत्र यः समानः धर्मः तिष्ठति, स साधारणधर्मः भवति। यथा चन्द्र इव मुखं सुन्दरम् इति। अत्र चन्द्रे मुखे च समानः धर्मः सौन्दर्यत्वं च अस्ति। उभयत्र विद्यमानं सौन्दर्यत्वधर्मम् आधारीकृत्य एव तुलना क्रियते। अत एव उभयत्र विद्यमानः धर्मः साधारणधर्मः।

### औपम्यवाचकशब्दः

उपामायाः भावः औपम्यम्। इवादिशब्दः उपमावाचकः भवति। अर्थात् येन शब्देन सादृश्यस्य स्पष्टप्रतीतिः जायते। यथा - चन्द्र इव मुखम् इति। अत्र चन्द्रेण साकं मुखस्य साधर्म्यम् अस्ति इति एतत् तु इवादिशब्देन स्पष्टं ज्ञायते। अत एव इवादिशब्दाः उपमावाचकशब्दाः भवन्ति।

### बिम्बम्

साक्षात् यत् वस्तु तत् बिम्बम्। यथा - मुखम्। यथा दर्पणे वयं मुखं पश्यामः। एकं तु अस्माकं मुखम्। अपरं दर्पणनिष्ठं मुखम्। साक्षात् मानवानां यत् मुखं तत् बिम्बम् अस्ति। यस्य प्रतिच्छविः दर्पणे अस्ति, तत् बिम्बम्।

### प्रतिबिम्बम्

कस्मिंश्चित् वस्तुनि पतितः प्रतिच्छविः, तत् प्रतिबिम्बम्। यथा - दर्पणे स्थितं मुखम्। यदा वयं दर्पणे मुखं पश्यामः। तदा तु दर्पणे मुखस्य कश्चित् प्रतिच्छविः दृश्यते। तत् एव प्रतिबिम्बम् अस्ति।

### प्रणिधानगम्यम्

प्रणिधानगम्यम् इत्यस्य अर्थः तु तात्पर्येण गम्यमानः अर्थः इति। साक्षात् वाच्यार्थः न भवति। परन्तु तात्पर्येण सः अर्थः गम्यते।

॥ इति षड्विंशः पाठः ॥

# २७

# रसपरिचयः

## प्रस्तावना

अयि प्रियच्छात्राः! अस्मिन् पाठे रसस्य विषये आलोचना वर्तते। प्रथमपाठात् आरभ्य विविधानां काव्यानाम् अध्ययनं युष्माभिः कृतम् अस्ति। तथैव छन्दोऽलङ्कारादीनामपि परिचयः युष्माभिः प्राप्तः अस्ति। तदनन्तरं रसस्य परिचयः प्राप्तव्यः। साहित्यशास्त्रस्य विषयेषु रसः सर्वप्रधानम् भवति। शब्द-अर्थ-अलङ्कारादयः रसतात्पर्येण एव काव्ये व्यवस्थिताः। अत्र रसविषये विभिन्नानि मतानि सङ्क्षेपेण प्रदर्श्यन्ते। एतस्य अध्ययनेन काव्यप्रकाश-रसगङ्गाधरादीनाम् अध्ययने महत् साहाय्यम् स्यात्। अत्र अत्यन्त- प्रधानस्थलेषु प्राचीनग्रन्थानां श्लोकाः उद्ध्रियन्ते। अन्यथा प्राचीनग्रन्थानाम् तात्पर्यम् एव सरलवाक्यैः प्रतिपाद्यते येन साहित्यशास्त्रेभ्यः इतरशास्त्राणां छात्राणामपि साहित्यशास्त्रविषयस्य बोधः सुष्ठु सम्पद्येत।

## उद्देश्यानि

पाठस्यास्याध्ययनेन -

- प्रधानम् विषयः रसः ज्ञास्यते।
- रससूत्रं रसस्य समन्वयम् रसानुभवस्य स्वरूपम् च ज्ञास्यति।
- रसानुभवस्वरूपे काव्यस्य लोकोत्तरत्वम् साधारणीकरणसिद्धान्तञ्च बुध्यात्।
- रसविषये उत्पत्तिवादम् अनुमितिवादम् भुक्तिवादम् अभिव्यक्तिवादञ्च ज्ञास्यति।
- करुणस्य आनन्दमयत्वसिद्धिः, रसानाम् अनुक्रमः, शान्तरसस्य महिमा च ज्ञातः भवेत्।
- रससिद्धान्तस्य समग्रः परिचयः सिद्ध्यति येन काव्यप्रकाशादिप्रौढग्रन्थेषु अध्ययनगतिः सुगमा भवति।

## २७.१) भूमिका

काव्यस्य काव्यशास्त्रस्य च परमं फलम् भवति रसः इति विदुषाम् अभिप्रायः। आनन्दो हि रसस्वरूपम्। सर्वेषाम् प्राणिनाम् सर्वं कार्यम् आनन्दे सुखे वा पर्यवस्यति। तथा काव्यस्य सर्वे विषयाः रसे पर्यवस्यन्ति। रसस्तु स्वस्मिन् पर्यवस्यति, न पुनः स्वपूर्णतार्थम् अन्यत्र प्रवर्तते। एष रसः काव्यात्मा इति प्रतिष्ठितः। दुग्धाद् दधि, दध्नो नवनीतं, नवनीताद् घृतं, घृतात् परं न किमपि भवति। अर्थात् दुग्धादीनाम् अत्यन्तसाररूपि घृतम् भवति। तथैव काव्ये रसः शब्दार्थादीनाम् समेषां सारभूतः अस्ति। रसस्य

प्रकाशनाय कवयः काव्यानि विरचयन्ति। तेषाम् एव अनुभवाय सहृदयाः काव्ये अनुरक्ताः भवन्ति। "नहि रसाद् ऋते कश्चिदर्थः प्रवर्तते" इति भरतमुनिः नाट्यशास्त्रे अवदत्। तेन न केवलं काव्यस्य अपितु गीतनृत्यादीनां सर्वेषां कलाप्रकाराणां रस एव आत्मा साररूप इति अवगन्तव्यम्। रस्यते इति रसः। रस्यते आस्वाद्यते इति अर्थः। तेन आनन्दरूपी स्वादो रस इति अवगम्यते। अस्य रसस्य प्रथमं निरूपणम् उपलभ्यते नाट्यशास्त्रे। तस्य रचयिता भरतमुनिः। नाट्यशास्त्रस्य षष्ठाध्याये रसस्य विषयो विस्तरेण प्रतिपादितः अस्ति। तत्र उक्तं विषयम् आधारीकृत्य ततः परकालीना आलङ्कारिका रसं निरूपितवन्तः। नाट्यशास्त्रस्य प्रसिद्धा प्रामाणिकी व्याख्या भवति अभिनवभारती। तस्या रचयिता अभिनवगुप्तपादः।

## २७.२) रससूत्रस्य विवरणम्

**"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः"** (नाट्यशास्त्रम्- ६) इति भवति रससूत्रम्। तच्च नाट्यशास्त्रे षष्ठाध्याये भवति। काव्येन नाट्येन वा उपस्थापितो रामसीतादिः समुद्रपर्वतमेघादिः वा विभाव इत्युच्यते। स सहृदयेषु रतिशोकादिभावान् अलौकिकरूपेण प्रबोधयति। तस्मात् तस्य विभाव इति नामधेयम्। विभावे विद्यमानाः कटाक्षप्रसार-स्मित-भाषणादि-चेष्टाविशेषः अनुभाव इत्युच्यते। तेन रामसीतादिषु विद्यामाना दर्शनभाषणादिक्रिया अनुभावा इति तात्पर्यम्। व्यभिचारी अर्थात् परिवर्तनशीलः अस्थिर इत्यर्थः। व्यभिचारिभावाः हि एकस्य रसानुभवस्य मध्ये आगच्छन्तः, किञ्चित् क्षणानन्तरं निर्गच्छन्तो मानसिका भावाः। ते च लज्जा-संशय-कुतूहलादयः।

### २७.२.१) समन्वयः

काव्येन नाट्येन वा उपस्थापिता भवन्ति रामसीतादय विभावाः। तेषाम् स्मित-दर्शन-संभाषणादिक्रिया वर्ण्यन्ते। तेषाम् लज्जा-हास-संशयादयो व्यभिचारिभावा अपि भवन्ति। एवञ्च रामसीतादयो लज्जा-हास-कुतूहलादियुक्ताः स्मित-दर्शन-भाषणादिक्रियायुक्ताश्च काव्येन नाट्येन वा उपस्थाप्यन्ते इत्यर्थः। एवम् विभावादीनां समुचिते संयोगे जाते सहृदयानां हृदये यः अलौकिक आनन्दः अभिव्यक्तो भवति स रसः।

## पाठगतप्रश्नाः-१

१. काव्यस्य आत्मा कः।

२. विभावः कः।

३. रससूत्रम् नाट्यशास्त्रे कस्मिन् अध्याये वर्तते।

४. कस्य प्रकाशनाय कवयः काव्यम् रचयन्ति।

५. रसपदनिर्वचनम् कथम्।

## २७.३) रसानुभवस्य स्वरूपम्

रससूत्रे विभावादीनां संयोगे रसो निष्पद्यते इति पश्यामः। तत्र रसात्मना कः तिष्ठति इति विषये जायते जिज्ञासा। तत्र आलङ्कारिका वदन्ति -

"**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः**" - इति (काव्यप्रकाशः ३/२)

अस्य वचनस्य अयम् अर्थः - विभावानुभावव्यभिचारिभावैः अभिव्यक्तः सहृदयेषु विद्यमानः रतिशोकादिः स्थायी भावः रसो भवति। सहृदयस्य मनसि अनादिवासनारूपेण अनेके भावाः सन्ति। ते च रति-हास-शोकादयः। ते रसत्वप्राप्तिपर्यन्तम् स्थिराः भवन्ति। अतः ते स्थायिभावाः इत्युच्यन्ते। ते च नव भवन्ति।

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च।।** (साहित्यदर्पणः. ३/१७५)

अस्मिन् श्लोके एते नव स्थायिभावाः सन्ति - रतिः हासः शोकः क्रोधः उत्साहः भयम् जुगुप्सा विस्मयः शमः इति।

तत्र रतिः हि अभीष्टे विषये मनसः अनुरागजः प्रमोदः। हासो नाम वागादीनाम् विकारात् जातः चित्तस्य विकासः। इष्टनाशादिकारणात् जातः मनसः दुःखविशेषः शोकः। इच्छाभङ्गादिषु प्रतिकूलेषु जातः मनसः तीक्ष्णतागुणः क्रोधः। उत्साहो नाम कार्यारम्भादिषु उत्कटः आवेशः। व्याघ्रादिदर्शनेन अत्यन्तानर्थविषयकम् चित्तस्य दौर्बल्यम् भयम् भवति। दोषादिदुर्विषयदर्शनात् जाता हेयबुद्धिः जुगुप्सा इत्युच्यते। लोकातीतेषु अत्यन्तम् अपूर्वेषु विषयेषु दृष्टेषु आश्चर्यरूपी चित्तविस्फारः विस्मयः। सकलतृष्णानाम् अभावे जातम् स्वात्मविश्रामसुखम् शमः भवति।

एतेषां भावानाम् अनिश्चयात्मकं ज्ञानम् भवति संशयज्ञानम्। यथा स्थाणुर्वा पुरुषो वा इति। अत्र इदं वस्तु स्थाणुः उत पुरुषः इति ग्रहणे अनिश्चयः विद्यते। ईदृशम् ग्रहणं संशयज्ञानम् इत्युच्यते।

लोके जीवनं सुखदुःखात्मकं भवति। तेषाम् एव काव्यमार्गेण अनुभवः लोकोत्तरः भूत्वा परमास्वादरूपी रसो भवति। एतेषां भावानाम् अनुभवः काव्ये कथम् अलौकिको भवति इति संदेहस्य समाधानम् अधुना क्रियते। तत्र प्रथमम्- तेषां लोकजीवने अनुभवः कथं लौकिकः इति प्रदर्श्यते। लोकजीवने सर्वे विषयाः मदीयाः अथवा मदीयाः न भवन्ति इति द्विविधाभ्याम् बुद्धिभ्याम् गृह्यन्ते। तेन लोके सर्वे पदार्थाः स्व-परसम्बन्धानाम् स्वीकारपुरस्सरम् अथवा परिहारपुरस्सरम् गृह्यन्ते इति। एवम् इदं वस्तु मम अस्ति, इदं वस्तु मम नास्ति, इदं वस्तु अन्यस्य अस्ति, इदं वस्तु अन्यस्य नास्ति इत्येवम् ग्रहणानि भवन्ति। अत्र सर्वत्र स्वस्य परस्य वा सम्बन्धस्य स्वीकारः परिहारो वा दृश्यते। इत्थं यत्किञ्चित् वस्तु गृह्यते चेत् तद्वस्तूनाम् ज्ञानम् अनुभवो वा लौकिकः इत्युच्यते। लौकिकः अनुभवः चतुर्विधैः ज्ञानैः भवति इति आलङ्कारिकाः वदन्ति। तानि च सम्यक् ज्ञानम्, मिथ्याज्ञानम्, संशयज्ञानम्, सादृश्यज्ञानम् इति चत्वारि ज्ञानानि। एतानि लोके व्यवहारसाधकानि भवन्ति।

**सम्यक् ज्ञानम्** - रामोऽयम् वृक्षोऽयम् इत्यादि ज्ञानम् यथार्थज्ञानम् इत्युच्यते। तच्च प्रत्यक्षादि-प्रमाणलब्धम् भवति।

**मिथ्याज्ञानम्** - मिथ्याज्ञानम् हि भ्रमात्मकं ज्ञानम्। यथा मन्दान्धकारे स्थितां रज्जुम् अदृष्ट्वा तत्स्थाने सर्पः इति प्रतीतिः, स्थाणुं दृष्ट्वा पुरुषः इति प्रतीतिः भवति। ईदृशम् अन्यथाग्रहणम् मिथ्याज्ञानम् इत्युच्यते।

**संशयज्ञानम्** - विषयस्य अनिश्चयात्मकं ज्ञानम् भवति संशयज्ञानम्। यथा स्थाणुर्वा पुरुषो वा इति। अत्र इदं वस्तु स्थाणुः उत पुरुषः इति ग्रहणे अनिश्चयः विद्यते। ईदृशम् ग्रहणं संशयज्ञानम् इत्युच्यते।

**सादृश्यज्ञानम्** - पूर्वम् ज्ञातस्य पदार्थस्य सादृश्यबलात् अज्ञाते विषये यादृशं ज्ञानम् भवति तत् सादृश्यज्ञानम्। यथा गौः इव गवयः अस्ति। अत्र गाम् जानन् कश्चित् पुरुषः पूर्वम् अदृष्टम् अपि गवयम् तत्-सादृश्यबलात् अवगच्छति। ईदृशम् ज्ञानम् सादृश्यज्ञानम् इत्युच्यते।

एभिः ज्ञानैः सर्वे व्यवहाराः सम्भवन्ति। किन्तु काव्यपदार्थस्य ग्रहणम् एभिः ज्ञानैः न भवति। चित्रतुरगन्यायेन काव्यस्य ग्रहणम् भवति। चित्रे लिखितः अश्वः न यथार्थरूपी, नापि अश्वभिन्नः, नापि अश्वसदृशः, नापि अश्वो वा तद्भिन्नो वा इति प्रतीयमानः। किन्तु अश्वोऽयम् इत्येव ज्ञायते। ईदृशं ज्ञानम् आहार्यज्ञानम् इति वदन्ति। यत्किञ्चित् प्रयोजनवशात् औचित्येन अतस्मिन् तद्बुद्धिः आहार्यज्ञानम् भवति। तच्च ज्ञानम् विवेकपूर्वकं भवति न तु रज्जुसर्पज्ञानवत्। रज्जौ सर्पज्ञानं यत् भवति तत् यथार्थस्य ग्रहणम् नास्ति। आहार्यज्ञाने तु यथार्थज्ञाने सत्यपि अन्य-प्रयोजनसिद्धये अनिदम् इदम् इति गृह्यते विवेकपूर्वकम् एव। यथा एकस्मिन् वने एकः सिंहः आसीत्। स वनराजो भवितुम् इच्छति स्म। तदर्थं प्राणिनाम् विश्वासलाभाय सभाम् आयोजितवान् इत्येवमादिः कथा प्रवर्तते। तत्र सिंहः वनराजत्वम् न इष्टवान्, प्राणिनाम् सभामपि न आयोजितवान्, यतः सिंहः कश्चित् प्राणी न तु विवेकी मनुष्यः। मनुष्यः चेत् तत्सर्वं कुर्यात्, न कदाचिदपि मृगः करोति इत्येवम् यथार्थः अस्माभिः ज्ञायते। तथापि सिंहस्य तादृशाः व्यवहाराः अङ्गीक्रियन्ते। अङ्गीकारश्च आहार्यज्ञानबलादेव। एवंविधेन ईदृशेन आहार्यज्ञानेन एव पञ्चतन्त्रादि-कथादिषु विस्तरेषु नीतिबोधः सिद्ध्यति। एवञ्च काव्यपदार्थाः विभावादयः वा आहार्यज्ञानेन विषयीक्रियन्ते इति तात्पर्यम्। तथा गृहीता विभावादयः साधारणा भवन्ति। साधारणीकरणेन विभावादीनाम् अलौकिकत्वम् सिद्धम् भवति।

## २७.४) साधारणीकरणम् -

विभावादीनाम् विषये स्वस्य विषये च सहृदयस्य देशकालादिसम्बन्धानाम् स्वकीयपरकीयत्वरूपाणाम् सम्बन्धानाम् स्वीकारस्य परिहारस्य अभावः साधारणीकरणम् भवति। अतः साधारणाः विभावादयः नाम एते मम, एते मम न भवन्ति, एते परस्य, एते न परस्य भवन्ति इत्येवंविधम् स्वसम्बन्धम् परसम्बन्धं च विना एव ज्ञायन्ते इत्यर्थः। देश-काल-स्वकीयपरकीयत्वादयः सम्बन्धाः लोके पदार्थानाम् आवरणरूपेण तिष्ठन्ति। तादृशं आवरणं यदा न दृश्यते तदा पदार्थः साधारणः भवति। सम्बन्धावरणम् भवति चेत् असाधारणम् एव भवति। असाधारणो नाम विशेषरूपी परिमितः इत्यर्थः।

लोके प्रायः सर्वे पदार्थाः असाधारणाः एव प्रतीयन्ते। तस्मात् एकेन पुरुषेण सम्बद्धः पदार्थः अन्येन अनुभवितुम् आस्वादयितुं वा न शक्यते। न खलु एकस्य भार्या अन्येन द्रष्टुमपि युक्ता। एवं सर्वे पदार्थाः सम्बन्धावरणेन सहिताः विशेषाः च भवन्ति।

काव्ये तु विभावादयः विशेषधर्मं विना एव प्रतीयन्ते अर्थात् साधारणाः एव प्रकाशन्ते। अतः कस्यचिदपि सम्बन्धः तेषां न भवति। सम्बन्धरूपम् आवरणम् भग्नम् भवति। अत एव काव्ये सर्वे विभावादयः पति-पत्नी-पुत्रादिरूपाः सर्वैः द्रष्टुम् आस्वादयितुं च शक्याः। श्रीकृष्णराधिकादीनाम् चुम्बनालिङ्गनादिकम् अपि सर्वेषाम् अवलोकनयोग्यम् भवति। न कदाचिदपि जीवने एवं भवति। तथा विभावादीनाम् साधारणतया प्रतीतिः अलौकिकप्रतीतिः इति आलङ्कारिका वदन्ति। विभावादीनाम् विषये आहार्यज्ञानम्, ततः साधारणीकरणञ्च सहृदयत्वमहिम्ना सिध्यति। विभावादयः यदा साधारणतया प्रतीयन्ते तदा सहृदयाणाम् हृदयम् विभावादिषु तन्मयम् भवति। तदा चित्ते सत्त्वगुणः व्याप्तो भवति। रजोगुणः तमोगुणश्च अधो गच्छतः। ततः चित्तमलरूपम् अज्ञानम् तत्कालम् निवर्तते। शुद्धसत्त्वमात्रम् प्रकाशते। अज्ञानमेव आत्मनः स्वरूपानन्दानुभवे प्रतिबन्धकं भवति। अज्ञानम् अत्र मुख्यतया अन्यथाज्ञानमेव। तच्च अहम् मनुष्यः कर्ता, सन्ति मम नैकानि कर्तव्यानि, ततश्च सन्ति भोक्तव्यानि फलानि इत्यादिरूपम् भवति। तेन आनन्दात्मकम् आत्मनः मूलरूपम् आच्छादितम् अस्ति। अतः संसारः आरब्धः अस्ति। ईदृशम् अज्ञानं लौकिकसम्बन्धानाम् ग्रहणेन तिष्ठति, साधारणीकरणे जाते तु तत् अज्ञानम् तात्कालिकनिवृत्तिम् प्राप्नोति। यथा विभाविदीनां विषये साधारणीकरणम् भवति तथा सहृदयस्य स्वविषये अपि साधारणीकरणम् भवति तदा अज्ञानस्य तात्कालिकनिवृत्तिः भवति। तदा पूर्वमेव विभावादिभिः प्रबोधितः साधारणीकृतश्च रत्यादिः स्थायी भावः चिदानन्दोपहितः रसः इत्यभिधीयते। एवम् विभावादिभिः प्रबोधितः सहृदयत्वमहिम्ना साधारणीकृतः रत्यादिः स्थायी भावः रसः इति अभिनवगुप्त-मम्मटादीनाम् मतम्।

जगन्नाथमते तु सहृदयत्वमहिम्ना विभावादयः साधारणा भवन्ति। तैः प्रबोधितो रत्यादिः स्थायी भावोऽपि साधारणः भवति। तदा साधारणीकृतेन चित्तवृत्त्यात्मना स्थायिभावेन उपहितः आत्मापि साधारणः सम्पद्यते। अतः लौकिककर्तृत्वादिसम्बन्धावरणम् विना एव व्यवतिष्ठते। एवम् स्वरूपप्रतिबन्धकनिवृत्त्या आत्मा रत्यादि-स्थायिभावेन उपहितं चिदानन्दलक्षणम् आत्मानम् आत्मना संवेत्ति। तेन साधारणीकृतेन रत्यादिना संवलितः अज्ञानावरणरहितः आत्मैव रसः इति स्थितम्। वेदेऽपि आम्नातम् "रसो वै सः, "रसं ह्येवायं लब्ध्वा आनन्दी भवति" इति। (तैत उप.ब्रह्म.वल्ली) रसः एव आत्मा। सः रसम् अर्थात् आत्मानम् लब्ध्वा आनन्दी भवति इति अस्य मन्त्रस्य अर्थः।

## पाठगतप्रश्नाः-२

६. रसः कः।

७. कति स्थायिभावाः सन्ति।

८. आहार्यज्ञानम् किम्।



९. अज्ञानम् किम्।

१०. व्यभिचारिभावः कः।

## २७.५) रससूत्रविवरणे मतभेदाः

रससूत्रस्य विवरणे चत्वारः वादाः प्रसिद्धाः सन्ति। ते अभिनवभारत्याम् उपलभ्यन्ते। रस उत्पद्यते इति भट्टलोल्लटः। रसः अनुमीयते इति श्रीशङ्कुकः। रसो भुज्यते इति भट्टनायकः। रसः अभिव्यज्यते इति अभिनवगुप्तः। अधुना एतानि मतानि सङ्क्षेपेण अवलोक्यन्ते।

**उत्पत्तिवादः -**

**विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः** इति भरतमुनिकृतं रससूत्रम् भवति। अत्र निष्पत्तिः इति पदस्य उत्पत्तिः इति अर्थं प्रतिपादयति भट्टलोल्लटः। अस्य मते विभावादीनां स्थायिभावानां रसस्य च मध्ये उत्पाद्य-उत्पादकभावः सम्बन्धः। अस्य मते रसः अनुकार्ये भवति। नटेन अभिनयद्वारा यस्य अनुकरणम् क्रियते सः अनुकार्यः। यथा रामः कृष्णः इत्यादयः अनुकार्याः। अनुकार्ये स्थितो रसो नटे रामत्वाद्यनुसन्धानबलात् प्रतीयते। तेन मुख्यतया अनुकार्येषु रामादिषु रसो भवति। गौणतया च स रसो नटेषु भवति इति भट्टलोल्लटमतम्।

**अनुमितिवादः -**

अनुमितिवादम् प्रतिपादितवान् श्रीशङ्कुकः। एष भट्टलोल्लटमते दोषम् आविष्करोति। रसः अनुकार्ये रामादौ यदि अङ्गीक्रियेत तर्हि ते रामादयः अधुना न सन्ति, यदि स्युः, अथापि न स रङ्गमञ्चे तिष्ठति। तस्मात् अनुकार्ये रसो न युक्तः। अतो रसः अनुमीयते इति अङ्गीकरणीयम्। लोके पर्वते दृश्यमानम् धूमम् दृष्ट्वा तत्र पर्वते वह्निः भवति इति निश्चयः क्रियते। अर्थात् समुचितकारणम् पुरस्कृत्य वह्नेः अनुमानम् क्रियते इत्यर्थः। एवं रामसीतादीनाम् अनुकर्तृषु नटेषु चुम्बनालिङ्गनादीन् अभिनयरूपान् चेष्टाविशेषान् दृष्ट्वा तत्तत् चेष्टानुगुणम् रसं नटेषु अनुमिन्वन्ति सामाजिकाः। अत्र नटे रसम् अनुमाय सहृदयाः स्वस्मिन् आनन्दम् अनुभवन्ति। इत्थम् श्रीशङ्कुकमते रसः अनुमानेन उपलभ्यते इति स्थितम्। तस्मात् रससूत्रे निष्पत्तिपदस्य अनुमितिः इत्यर्थः सिध्यति तन्मते।

**भुक्तिवादः-**

भुक्तिवादं भट्टनायकः प्रतिष्ठापितवान्। एष प्रथमम् श्रीशङ्कुकमते दोषम् आविष्करोति। नटेषु रसो यदि अङ्गीक्रियेत तर्हि काव्यादिषु सहृदयानाम् आनन्दः कथम् भवितुम् अर्हति। काव्यादिषु आनन्दः यदि सहृदयस्य न भवति तर्हि सहृदयः काव्यादिषु किमर्थम् प्रवर्तेत। नटेषु अनुमितो रसो लौकिक एव भवति। तस्य साधारणीकरणम् नास्ति इति कारणात् शृङ्गारादिरसप्रधानम् काव्यम् सभ्यानां जुगुप्साकरम् भवेत्। अनुमानपक्षे तु हेतुः व्यभिचरितो भवति इति अन्योऽपि दोषः श्रीशङ्कुकमते तिष्ठति। तस्माद् भट्टनायको भुक्तिवादम् प्रतिपादयति। तन्मतं यत् काव्ये अभिधया काव्यार्थबोधः सम्पद्यते इति। तदनन्तरम् काव्यस्य भावकत्वव्यापारेण विभावादीनां साधारणीकरणम् भवति। ततः सहृदयस्य सत्त्वोद्रेको भवति यो



रसानुभवयोग्यताम् मनसि निष्पादयति। तदा चित्तविक्षेपकारकौ रजस्तमोगुणौ न तिष्ठतः। ततः परं चिदानन्दरूपी आत्मा स्वस्मिन् विश्रान्तो भवति। सा च विश्रान्तिः रत्यादिस्थायिभावसहिता भूत्वा भोगीकरणव्यापारेण भुज्यते। तस्मात् अस्मिन् मते निष्पत्तिः इत्यस्य भुक्तिः इत्यर्थः।

**भट्टनायकमते दोषाः -**

विभावादीनां साधारणीकरणार्थं काव्यशब्दानामेव भावकत्वव्यापारः अङ्गीकृतः। स च अयुक्तः। भावकत्वं च सहृदयहृदयधर्मो भवति, न तु शब्दधर्मः।

आत्मविश्रान्तिरूपं रसम् आस्वादयितुम् भोजकत्वव्यापारः तेन अङ्गीकृतः। स च न आवश्यकः। यतो हि घटेन आच्छादितं दीपं द्रष्टुं घटस्य अपसारणमात्रं कर्तव्यम् अस्ति। घटापसारणे कृते ज्वलन् दीपः स्वयमेव प्रकाशते। घटापसारणात् परं दीपप्रदर्शनम् इति अपरो व्यापारः अवशिष्टो न भवति। तथा आत्मनः चैतन्यरूपिणः आनन्दस्य अनुभवे प्रतिबन्धकनिवारणम् यदा भवति तदा स्वप्रकाशस्य आत्मनो विश्रान्तिसुखम् आत्मना एव अनुभूयते।

**भट्टनायकमते गुणाः -**

रसः सहृदयनिष्ठ इति तस्य मतम् अतीव समञ्जसम्। रसप्रक्रियायाम् प्रधानम् कीलकस्थानम् विभावादीनाम् साधारणीकरणम्। तस्य निरूपणे भट्टनायकस्य सुमहद् योगदानम् भवति।

## अभिव्यक्तिवादः-

अभिव्यक्तिवादम् प्रतिष्ठापितवान् अभिनवगुप्तपादः। आनन्दवर्धनस्य मतम् आसीत् यत् काव्यरसयोर्मध्ये व्यङ्ग्य-व्यञ्जकभाव इति। तस्य सुष्ठु प्रतिष्ठाम् कृतवान् अभिनवगुप्तपादः। अस्य मते रसो निष्पद्यते इत्यस्यार्थो हि रसः अभिव्यज्यत इति। काव्येन नाट्येन वा विभावादीनाम् उपस्थापनम् भवति। सहृदयत्वमहिम्ना विभावादीनां साधारणीकरणम् भवति। साधारणीकृतैः विभावादिभिः सहृदयस्य रत्यादिस्थायिभावानां साधारणीकरणपूर्वकमेव प्रबोधनम् भवति। साधारणीकृते स्थायिभावे प्रमाता अपि साधारणो भवति, अर्थात् अज्ञानस्य तात्कालिकनिवृत्तिः भवति। अज्ञानञ्च अत्र लौकिकसम्बन्धरूपम् अहम् कर्ता, मम एते, मम न एते, इदम् अन्येषाम् इत्यादिलक्षणम् भवति। येन प्रमाता असाधारणः परिमितश्च भवति। तस्य तात्कालिकनिवृत्तौ सम्बन्धावरणरहितो रत्यादिस्थायिभावः आत्मस्वरूपेण चिदानन्देन विषयीकृतो भवति। एवं साधारणीकृतः अत एव चिदानन्दविषयीकृतः स्थायिभावः अभिव्यक्तः इत्युच्यते। स च आनन्दरूपी रसो भवति।

एतेन अभिव्यक्तिवादेन रससिद्धान्तः प्रतिष्ठितः। जगन्नाथः अस्य चरमपरिष्कारम् कृतवान्। अभिनवगुप्त-मम्मटादीनाम् मते चिदानन्दसंवलितः अज्ञानावरणरहितः स्थायी भावो रसो भवति। जगन्नाथमते तु रत्यादिस्थायिभावसहितः किन्तु अज्ञानावरणरहित आत्मा एव रसो भवति। अन्याः प्रक्रियाः जगन्नाथमते अभिनवगुप्तादीनाम् मते च समाना भवन्ति।

## पाठगतप्रश्नाः-३

११. रसः अनुकार्ये अस्ति इति कः अवदत्।

१२. अनुकर्तरि रसः अस्ति इति कस्य मतम्।

१३. भोगीकरणव्यापारः कुतः स्वीकृत्ः।

१४. साधारणीकरणम् प्रथमतया केन निरूपितम्।

१५. अभिव्यक्तिवादस्य प्रतिष्ठा केन कृता।

१६. आनन्दवर्धनमते रसः कीदृशः।

१७. अभिनवगुप्तमते भोगीकरणम् कुतः नास्ति।

१८. अभिनवगुप्तमते साधारणीकरणम् कथम् सिद्ध्यति।

## २७.६) करुणरसविषये आक्षेपः समाधानञ्च

शोकस्थायिभावात्मको भवति करुणरसः। शोकः तस्य स्थायिभावः चेत् अयम् आनन्दमयो न भवेत्। अतो रस्यते आस्वाद्यते इति रस इति रसपदव्यवहारः करुणे युक्तो न भवति इति आक्षेपः। तस्य समाधानम् एवं विद्यते - करुण आनन्दरूपी इत्यत्र सहृदयानाम् अनुभवः प्रमाणम्। यदि करुणरसो दुःखरूपी तर्हि करुणरसात्मके काव्ये कोऽपि न प्रवर्तेत। करुणप्रधानं रामायणादिकाव्यं लोके दुःखहेतुः स्यात्। किन्तु तेषु काव्येषु लोकस्य इच्छापूर्वक-प्रवृत्तिः दृश्यते। अतः करुण आनन्दरूपी एव। रसप्रक्रियायाम् अङ्गीकृतेन साधारणीकरणेन करुणो दुःखरूपी इति न सिद्ध्यति।

## २७.७) रसानाम् क्रमः

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा पुनः।।** (सा.द.३.७६)

अत्र रसानां क्रमो विद्यते। भरतमुनिः अपि इममेव क्रमम् अनुसृतवान्। शृङ्गारः हास्यः करुणः रौद्रः वीरः भयानकः बीभत्सः अद्भूतः शान्तः इति नव रसाः क्रमशो विद्यन्ते। एतस्य क्रमस्य महत्त्वं वर्णयति अभिनवगुप्तः अभिनवभारत्याम्।

तत्र रतिः सकलप्राणिनाम् स्वाभाविकी बलवती प्रिया च भवति। तस्माद् रतिस्थायिभावकः शृङ्गारः प्रथमः। स कामप्रधानः। हास्यः सर्वदा शृङ्गारानुगामी। तस्मात् स द्वितीयः। सुखस्य विरोधी शोकः। तस्मात् शोकस्थायिभावः करुणः तृतीयः। करुणस्य निमित्तभूतः क्रोधः। तस्मात् क्रोधस्थायिभावात्मको रौद्ररसः चतुर्थः। रौद्रः अर्थप्रधानः अर्थात् जीवनस्य साधनभूतानाम् द्रव्याणाम् कारणाद् जायते। जीवनसाधनभूतं सर्वं द्रव्यम् अर्थ इत्युच्यते। तस्य अर्थपुरुषार्थः इति नाम। कामस्य अर्थस्य च मूलं धर्मः। तस्माद् धर्मप्रधानो वीररसः पञ्चमः। उत्साहस्थायिभावात्मकः स भीतानाम्

अभयप्रदानपरः। अतो वीरानन्तरम् भयानकः। भयानकरसस्य विभावादीनां साधारण्यम् बीभत्सस्य भवति। तस्माद् भयानकानन्तरम् बीभत्सः। वीररसस्य अन्तिमपरिणामो विस्मयः। तस्माद् अन्ते विस्मयस्थायिभावः अद्भुतरसः। एवम् अष्टौ रसा धर्मार्थकामरूपस्य त्रिवर्गस्य प्रतिनिधित्वेन व्यवस्थापिताः। त्रिवर्गस्तु प्रवृत्तिधर्मेण सिद्धो भवति। तद्विरुद्धो निवृत्तिधर्मः। तेन अपवर्गः अर्थाद् मोक्षः सिद्ध्यति। तस्मात् सर्वान्ते मोक्षफलकः शान्तः पठितः।

## २७.८) शान्तरसस्य महत्त्वम्

अलङ्कारशास्त्रे शान्तरसस्य परमोच्चं स्थानं वर्तते। शान्तरसविषये भरतमुनिः एवम् अवदत् - **अथ शान्तो नाम शमस्थायीभावात्मको मोक्षप्रवर्तकः। स तत्त्वज्ञान-वैराग्य-आशयशुद्ध्यादिभिः भावैः समुत्पद्यते** इति। अस्य अयम् अर्थः - शमस्थायिभावेन शान्तरसः परिपक्वो भवति। शमभावः आत्मानात्मविवेकरूपेण तत्त्वज्ञानेन वैराग्येण च सिद्ध्यति। शमो नाम शान्तिः उपशमः अर्थात् संसारे यत्किञ्चित् पदार्थद्वारा प्राप्तव्यात् सुखात् दुःखात् वा मनसि क्षोभो यदि न भवति स शमभावः। संसारस्य आत्मनश्च यथार्थबोधः तत्त्वज्ञानम् इत्युच्यते। तत्त्वज्ञानेन दुःखात्मके अनित्ये संसारे औदासिन्यम् भवति। तत्त्वज्ञानसिद्धेन वैराग्येण संसारे प्राप्तुम् इष्टं कर्तव्यं वा न तिष्ठति। ईदृशं वैराग्यम् अवलम्ब्य आत्मज्ञानरूपम् ब्रह्मानन्दम् आत्मनि प्राप्तुम् अर्हति। शमस्थायिभावात्मकः शान्तरसो नित्यानित्यविवेक-वैराग्य-ध्यान-ब्रह्मचिन्तनादि-भावैः सिद्धं मोक्षम् प्रति प्रेरणाम् जनयति। तस्मात् शुक-शङ्कराचार्यादीनां जीवनचरितम् मुमुक्षवः अपि आस्वादयन्ति। आत्मनि यथा सर्वे लोका लीयन्ते तथा सर्वे भावा अर्थात् रसाः शान्ते लीयन्ते। तदुक्तवान् भरतमुनिः-

**स्वं स्वं निमित्तमासाद्य शान्ताद् भावः प्रवर्तते।**
**पुनर्निमित्तापाये तु शान्त एव प्रलीयते।।**

सरलार्थः - रति-हास-शोकादि-निमित्तानि आश्रित्य शृङ्गार-हास्य-करुणादि-रसाः अभिव्यज्यन्ते। पुनः रतिहासादिनिमित्तानाम् अभावे ते शान्ते एव लीयन्त इति। तस्मात् स एव वदति -

**भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः।**

सरलार्थः - शृङ्गारादयः अष्टौ रसाः शान्ताद् उत्पद्यन्ते यथा आत्मनो जगद्भावा उत्पद्यन्ते। शान्तो न उत्पद्यते इत्यतः स प्रकृतिः इत्युच्यते यथा वेदान्तिनाम् परमात्मा।

### रसतालिका

| रसः | स्थायिभावः | व्यभिचारिभावाः | वर्णः | देवता |
|---|---|---|---|---|
| शृङ्गारः | रतिः | लज्जा-हास-चिन्ता-कुतूहलप्रभृतयः | श्यामः | विष्णुः |
| हास्यः | हासः | निद्रा-आलस्यादयः | श्वेतः | प्रमथगणः |
| करुणः | शोकः | मोह-विषाद-ग्लानि-स्मृतिप्रभृतयः | कपोतवर्णः | यमः |
| रौद्रः | क्रोधः | मद-अमर्ष-मोहप्रभृतयः | रक्तवर्णः | रुद्रः |

| | | | | |
|---|---|---|---|---|
| वीरः | उत्साहः | धृति-मति-गर्व-स्मृतिप्रभृतयः | हेमवर्णः गौरो वा | इन्द्रः |
| भयानकः | भयम् | भ्रान्ति-शङ्का-अवस्मारप्रभृतयः | कृष्णवर्णः | कालः |
| बीभत्सः | जुगुप्सा | मोह-आवेग-अवस्मार-व्याधिप्रभृतयः | नीलवर्णः | महाकालः |
| अद्भुतः | विस्मयः | वितर्क-भ्रान्ति-आवेग-हर्षादयः | पीतवर्णः | ब्रह्मा |
| शान्तः | शमः | निर्वेद-धृति-मति-दयादयः | अतिधवलवर्णः | नारायणः |

## पाठगतप्रश्नाः-४

१९. हास्यः कम् अनुगच्छति।

२०. धर्मप्रधानः रसः कः।

२१. करुणात्परम् रौद्ररसः कुतः।

२२. मोक्षप्रवर्तकः रसः कः।

२३. शान्तस्य स्थायीभावः कः।

२४. विकृतिरसाः कति।

२५. शान्तः कुतः प्रकृतिरसः।

२६. भावाः कदा शान्ते विलीयन्ते।

## किम् अवगतम्

काव्यस्य काव्यशास्त्रस्य च परमोच्चः विषयः भवति रसः। रसस्य अनुभवेन कवयः काव्यम् रचयन्ति। तेन काव्येन रसमेव अनुभवन्ति सहृदयाः। काव्यस्य शब्द-अर्थ-अलङ्कारादयः सर्वे अंशाः रसे परिसमाप्यन्ते। रसः स्वस्मिन् परिसमाप्तः। स काव्यात्मा। तस्य निष्पत्तिम् भरतमुनिः निरूपितवान्। विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः इति भरतकृतं रससूत्रम्। काव्येन नाट्येन वा समर्पिता विभावादयः सहृदयत्वबलात् साधारणा भवन्ति। साधारणीकरणात् ते काव्यपदार्था लोकोत्तरा भवन्ति। एवं साधारणा अलौकिकाः च सन्तो विभावादयः सहृदयानां रत्यादिस्थायिभावान् उद्बोधयन्ति। तदा रत्यादिस्थायिभावः अपि साधारणः सन् जागरितो भवति। साधारणीकरणबलात् लौकिकसम्बन्धाः तत्र न प्रतीयन्ते। ततःपरम् आत्मानन्दस्य प्रतिबन्धकम् अज्ञानम् तात्कालिकनिवृत्तिम् प्राप्नोति। तदा प्रतिबन्धकाभावात् स्वयंप्रकाशशीलेन आनन्दरूपिणा आत्मना विभावादिभिः अभिव्यक्तः स्थायी भावः प्रकाशितो भवति। साक्षाद् आत्मना प्रकाशो भवति, अतः स्थायी भाव आनन्दमयो भवति। एवं

विभावादिभिः अभिव्यक्तो रत्यादिस्थायिभावो रस इति अभिनवगुप्तमम्मटादीनाम् अभिप्रायः। जगन्नाथस्तु रत्यादिस्थायिभावयुक्त आवरणरहित आत्मा एव रस इति वदति। तत्र प्रमाणश्रुतिः भवति - रसो वै सः, रसं ह्येवायं लब्ध्वा आनन्दी भवति। इति।

रसव्याख्याने चत्वारो वादाः प्रसिद्धाः। ते च क्रमेण उत्पत्तिवादः, अनुमितिवादः, भुक्तिवादः, अभिव्यक्तिवादः चेति। तेषां वादानां वक्तारः क्रमेण भट्टलोल्लटः, श्रीशङ्कुकः, भट्टनायकः, अभिनवगुप्तपादः चेते भवन्ति। स्थायिभावाः नव सन्ति। तेन रसा अपि नव भवन्ति। तेषु शृङ्गारतः अद्भुतपर्यन्तम् अष्टौ रसा धर्मार्थकामानां प्रतिनिधिरूपा भवन्ति। शान्तो मोक्षप्रतिनिधिर्भवतीति शम्।

## पाठान्तप्रश्नाः

१. रससूत्रम् व्याख्यात।
२. साधारणीकरणम् निरूपयत।
३. काव्यपदार्थस्य लोकोत्तरत्वम् कथम् सिद्ध्यति।
४. भट्टनायकमते गुणदोषयोः आलोचनम् कुरुत।
५. अभिव्यक्तिवादम् विषदयत।
६. करुणस्य आनन्दमयत्वम् उपपादयत।
७. शान्तरसस्य महत्वम् प्रतिपादयत।
८. उत्पत्तिवादे अनुमितिवादे च के दोषाः सन्ति।

## पाठगतप्रश्नानामुत्तराणि

१. रसः
२. येन रत्यादिस्थयीभावः प्रबोध्यते सः विभावः
३. षष्ठाध्याये
४. रसस्य प्रकाशनाय
५. रस्यते आस्वाद्यते इति रसः
६. विभावादिभिः अभिव्यक्तः रत्यादिः स्थायीभावो रसः।
७. नव।
८. यत्किञ्चित्प्रयोजनवशात् विवेकपूर्विका अतस्मिन् तद्बुद्धिः।
९. अहम् कर्ता मम कर्तव्यानि सन्ति इत्यादि अन्यथाग्रहणम् अज्ञानम् इत्युच्यते।
१०. व्यभिचरणशीलः अर्थात् अस्थिरस्वभावः व्यभिचारिभावः।
११. भट्टलोल्लटः।
१२. श्रीशङ्कुकस्य।
१३. रसानुभवार्थम्।
१४. भट्टनायकेन।
१५. अभिनवगुप्तेन।



१६. रसः अभिव्यङ्ग्यः।

१७. रसः स्वप्रकाशः इति कारणात्।

१८. सहृदयत्वमहिम्ना।

१९. शृङ्गारम् अनुगच्छति।

२०. वीररसः।

२१. शोकनिमित्तः क्रोधः।

२२. शान्तः।

२३. शमः।

२४. अष्टौ।

२५. सर्वेरसाः शान्ते लीयन्ते।

२६. निमित्ते नष्टे शान्ते विलीयन्ते।



## अवलोकनीयाः ग्रन्थाः

- साहित्यदर्पणम् - तृतीयाध्यायः
- काव्यप्रकाशः - तृतीयाध्यायः
- रसगङ्गाधरः - प्रथमाननम्
- अभिनवभारती - षष्ठ्याध्यायः

॥ इति सप्तविंशः पाठः ॥

# राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानम्

## उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

## संस्कृतसाहित्यम् (३४८)

### औचित्यम्

संस्कृते काव्यसम्पत्तिः सागरवत् अपारा अमूल्या च वर्तते। तत्र अस्माकं सनातनज्ञानराशिः तदात्मकं जीवनं च प्रतिबिम्बितं वर्तते। कवीनां काव्यानाम् अलङ्कारशास्त्रस्य च अध्ययने छात्रस्य भूमिका अपेक्षिता। काव्यराशेः मूलं स्वरूपं वेदे एव दृश्यते। साहित्यस्य प्रवेशार्थं वेदादिवाङ्मयस्य परिचयः आवश्यकः अस्ति। अपि च वेदेन उपदिष्टं तत्त्वमेव काव्येन प्रकटीक्रियते। वेदस्तु षडङ्गसहितः अस्ति। अतः वेदस्य षडङ्गानाञ्च परिचयः अपि आवश्यकः। वेदकाव्ययोः मध्यवर्ति पुराणसाहित्यम्। तस्मात् पुराणस्यापि सामान्यपरिचयः आवश्यकः। स च अत्र अस्ति। एवं वेदस्य पुराणस्य च परिचयं प्राप्य काव्यस्य प्रवेशः भवति।

संस्कृतिर्नाम सुपरिष्कृता जीवनपद्धतिः यया क्रमशः आत्मोद्धारः सिद्ध्यति। भारतीयसनातनसंस्कृतिः चतुर्भिः पुरुषार्थैः परिकल्पिता वर्तते। धर्मः अर्थः कामः मोक्षः इति चत्वारः पुरुषार्थाः। कामो नाम लौकिकजीवनसन्तृप्तिः सुखं वा। अर्थो नाम तादृशसुखलाभार्थम् अपेक्षितानि वस्त्र-आहार-धन-क्षेत्रादीनि जीवनसाधनानि। धर्मो नाम अर्थानामर्जने तद्वारा सुखलाभे शास्त्रोक्तः नियमविशेषः। मोक्षः अनन्तः शाश्वतानन्दः। एतेषां विवेके वेदः परमं प्रमाणम्।

कवेः कर्म काव्यम् इति आलङ्कारिका वदन्ति। तच्च रमणीयं शब्दार्थयुगलम्, रसात्मकं वाक्यम् इत्यपि अन्यान्यविद्वांसः वदन्ति। अस्मत्परम्परायां जीवनविवेकाय शास्त्रमार्गः इव काव्यमार्गोऽपि अतीव आदृतो वर्तते।

वेदः प्रभुसम्मितः इत्युच्यते। पुराणं मित्रसम्मितम् उत्युच्यते। काव्यं हि कान्तासम्मितं भवति। कान्तासम्मितं नाम कान्तासदृशम् इत्यर्थः। कान्ता नाम प्रिया भार्या इत्यर्थः। (यदा) लोके साध्वीं कुशलां च कान्तां किमपि जिज्ञासमानः पृच्छति। तदा सा साक्षात् अभिप्रायवाचकं वाक्यं परित्यजति। ततः स्मित-कटाक्ष-मुखावनमनादिचेष्टाविशेषपुरःसरं परोक्षतः स्वाभिप्रायसूचकैः वचनैः अभिमतार्थं ज्ञापयन्ती तत्र कान्तं प्रवर्तयति। यथा किम् आम्रफलम् आस्वादयसि उत द्राक्षाफलम् इति कान्तः कान्तां पृच्छति। तदा आम्रफलमास्वादयामि इति साक्षात् न वदति। आम्रफलं मधुरं परिमलयुक्तं विविधवर्णरञ्जितं भवति इति वदति। तेन एतदेव उक्तं भवति यत् अहम् आम्रफलम् आस्वादयितुमिच्छामि इति। एवं कान्तानां यथा परोक्षतः स्वाभिप्रायाभिव्यञ्जनशैली वचने भवति तथा काव्यस्यापि भवति। अतः काव्यं कान्तासम्मितम् इति प्रसिद्धम्। कान्तावचनं यथा सरसं मनोहरं भवति तथा काव्यमपि सरसरमणीयं भवति येन सहृदयहृदयम् आकृष्टं भवति। एतस्मात् कारणात् वेदात् पुराणात् च विलक्षणं भवति।

ईदृशानां काव्यानाम्, कवीनाम्, काव्यशास्त्रस्य च परिचयः छात्राणाम् भवतु इति धिया संस्कृतसाहित्यम् नाम पत्रं पाठ्यत्वेन योज्यते। (Communications Skill) भावविनिमयकौशलम् पुरा अद्यापि च गुरुत्वम् आवहति। स्वाभिप्रायः कथं साक्षात् परोक्षतः वा प्रकटयितुं शक्यः इति काव्यात् ज्ञायते। इत्थं काव्याध्ययनस्य बहूनि प्रयोजनानि सन्तीति औचित्यम् आवहति यद् सर्वश्रेष्ठानां कवीनाम् काव्यानि पठनीयानि इति।

### अधिकारी

अयं पाठ्यविषयः सम्पूर्णरूपेण संस्कृतभाषया लिखितः अस्ति। परीक्षा अपि संस्कृतमाध्यमेन एव भविष्यति। अतः अस्य पाठस्य कः अधिकारी इति नूनम् समुदेति प्रश्नः।

अत्र स छात्रः अधिकृतः यः -

- अधीतव्याकरणकोषः काव्यरसपिपासुः।
- सरलसंस्कृतं, संस्कृतसाहित्यास्य सरलगद्यांशान् पद्यांशान् च पठितुम् बोद्धुं च शक्नोति।
- सरलसंस्कृतं बोद्धुं शक्नोति।
- स्वभावं संस्कृतभाषया लिखित्वा प्रकटयितुं शक्नोति।

## प्रयोजनम् (सामान्यम्)

उच्चतरमाध्यमिकस्तरे संस्कृतसाहित्यस्य पाठ्यत्वेन योजनस्य कानिचन उद्देशानि अत्राधो दीयन्ते।

- जीवनस्य चरमलक्ष्यं सुखलाभः। इह परत्र च। काव्याध्ययनेन तत् सिद्ध्यति। अतः अध्येतॄणां सिध्यतु।
- बहूनि काव्यानि सुखप्रतिपादनाय प्रवृत्तानि सफलानि विफलानि च भवन्ति। तत्र वैफल्यस्य कारणानि कानि इति ज्ञात्वा छात्रः काव्यस्य सूक्ष्मं चिन्तनं कर्तुम् प्रभवेत्।
- कविः यथा स्वस्य विचित्राभिः उक्तिभिः जनान् रञ्जयति तथा काव्याध्ययनेन छात्रोऽपि सामर्थ्यम् अर्जयेत्। अन्यकृतस्य काव्यस्य च आदरं कुर्यात्।
- स्वस्य स्वपरिचितानां च जीवनं काव्यरसेन परिपूर्णं कर्तुं प्रवर्तते।
- संस्कृतकाव्यानां महिमानम् अवगम्य तत्प्रचारे बद्धादरः सश्रद्धं प्रवर्तताम्।
- अति प्राचीनाया भारतीयज्ञानसम्पदः वैज्ञानिकता सर्वजनोपकारिता महिमा च सगर्वं जगति प्रसारयेत् छात्रः।
- काव्यग्रन्थानाम् सरलान् अंशान् पठित्वा छात्राः तेषाम् अंशानाम् अर्थान् ज्ञास्यन्ति। ते स्वतः मौखिकीं लिखितां च अभिव्यक्तिं कर्तुं शक्ष्यन्ति।
- काव्याध्ययनेन छात्राः महाविद्यालयस्तरे विश्वविद्यालयस्तरे च प्रवर्तमानेषु पाठ्यक्रमेषु अध्ययनार्थम् अवसरं प्राप्तुं समर्थाः भविष्यन्ति।
- काव्येषु रुचिमान् भूत्वा शक्तः संलग्नः भविष्यति।

## प्रयोजनम् (विशिष्टम्)

**संस्कृतसाहित्ये प्रवेशस्य सामर्थ्यम्**

- काव्येषु के विषया अन्तर्भवन्ति इति सामान्यज्ञानं भवेत्।
- कवीनां परिचयं प्राप्नुयात्।
- काव्यानां परिचयं प्राप्नुयात्।
- काव्यालङ्कारच्छन्दसाम् परिचयं प्राप्नुयात्।
- रससिद्धान्तं जानीयात्।
- पठितसामग्रीम् आश्रितानां प्रश्नानाम् उत्तराणि दातुं प्रभवेत्।।

**संस्कृतसाहित्याध्ययने सामर्थ्यम्**

- काव्यानाम् अध्ययनस्य कश्चित् विशिष्टः क्रमः वर्तते। तज्ज्ञानं प्राप्य काव्यस्य अग्रे अध्ययने समर्थो भवेत्।
- काव्ये विद्यामानां छन्दसाम् अलङ्काराणां व्याकरणांशान् च ज्ञास्यति।
- तेषां ज्ञानेन अन्यत्र विद्यमानानाम् अलङ्कारादीनां ज्ञानं भवेत्।
- कवीनाम् अलङ्कारिकाणां च परिचयं प्राप्नुयात्।

- छन्दः अलङ्कारः रसः इत्यादीन् विषयान् बुद्ध्वा स्वयं काव्यरचनायां सामर्थ्यशाली भवेत्।
- अस्य पाठ्यविषयस्य ज्ञानेन तस्मिन् दर्शने विद्यामानानाम् अन्येषाम् आकरग्रन्थानाम् अध्ययने समर्थो भवेत्।

**संस्कृतसाहित्यप्रयोगस्य सामर्थ्यम्**

- संस्कृतकाव्यानाम् अध्ययनेन स्वस्य वाचि काव्यात्मकता स्यात्।
- अपरकृतस्य काव्यप्रयोगस्य ज्ञानं भवेत्।
- भावविनिमयः प्रभावितया कर्तुम् प्रभवेत्।
- वाण्या भावविनिमये अलङ्कारादीनाम् शास्त्रसम्मतं प्रयोगं कर्तुं प्रवर्तेत
- वाचि विद्यमानं संयोगवियोगसामर्थ्यम् अवगच्छेत्।
- यथा वैद्यः जनं दृष्ट्वा तस्य रोगादिकं चिन्तयति। चौरः वित्तकोषादिकं चिन्तयति। वणिक् क्रेतारम् पश्यति। तथा जगतः कविरूपेण दर्शने समर्थो भवेत्।

## पाठ्यसामग्री

**पाठ्यक्रमेण सह निम्नलिखितसामग्री समायोजिता भविष्यति**

- द्वे मुद्रिते पुस्तके।
- एकं शिक्षकाङ्कित-मूल्याङ्कनप्रपत्रम् प्रदास्यते। अनेन सह छात्रैः एकं परियोजनाकार्यमपि (Project) करणीयम्।
- काव्यस्य शिक्षणं प्रायोगिकरूपेण अपि भविष्यति। परन्तु प्रायोगिकपरीक्षा कापि नास्ति।
- पाठनिर्माणे संपर्ककक्षासु च अध्यापनकाले छात्रेषु जीवनकौशलानां सम्यक् विकासः भवेत् इति ध्यातव्यम् भविष्यति। अनेन तेषु स्वतः युक्तिसमन्वितचिन्तनशक्तेः विकासः भविष्यति।
- मुक्तविद्यालये प्रवेशोत्तरं पाठ्यक्रममिमं विद्यार्थी एकवर्षत: अधिकाधिकं पञ्चवर्षेषु पूरयितुं शक्नोति।

## अङ्कमूल्यायनप्रविधिः परीक्षायोजना च

- पत्रस्य (१००) शतम् अङ्काः सन्ति। परीक्षाकालः होरात्रयात्मकः। अस्य पत्रस्य लिखितस्वरूपमेवास्ति (Theory)। प्रायोगिकरूपं (Practical) किमपि नास्ति। क्रमिकम् (Formative) समुच्चितं (Summative) चेति द्विविधं मूल्यायनं भविष्यति।
- **क्रमिकं मूल्यायनम् -** विंशतेः अङ्कानां (२०) शिक्षकाङ्कितस्य कार्यस्य (TMA) एकं पत्रं स्यात्। अस्य मूलायनम् अध्ययनकेन्द्रे (Study Centre) भवेत्। अस्य कार्यस्य अङ्काः अङ्कपत्रिकायां (Marks sheet) पृथक् उल्लिखिताः स्युः।
- **समुच्चितं मूल्यायनम् -** वर्षे वारद्वयं (मार्चमासि अक्टोबरमासि च) बाह्यपरीक्षा भविष्यति। तत्र परीक्षायां समुच्चितं मूल्यायनं भविष्यति।
- प्रश्नपत्रे ज्ञानम् (Knowledge), अवगमम् (Understanding) अभिव्यक्तिं (Application skill) चावलम्ब्य युक्तानुपातेन प्रश्नाः समाविष्टाः स्युः।
- परीक्षासु अतिलघूत्तरात्मक- लघूत्तरात्मक-निबन्धात्मक-प्रश्नानामपि समावेशः भविष्यति।
- सूत्रार्थः सूत्रव्याख्या रूपसाधनम् इति त्रयो मुख्याः विषयाः स्युः। अन्ये प्रसक्तानुप्रसक्ताः केचिद् विषयाः अपि स्युरिति अवधेयम्।
- उत्तीर्णतायै पणः (condition) - प्रतिशतं त्रयस्त्रिंशद् (३३%) अङ्काः उत्तीर्णतायै पणः (मानदण्डः) वर्तते।
- संस्थानस्य परीक्षायाम् उत्तरलेखनभाषा - संस्कृतम् (अनिवार्यम्)

## अध्ययनयोजना

- निर्देशभाषा (Medium of instruction) - संस्कृतम्।
- स्वाध्यायाय कालावधिः (Self-study hours) २४० होराः
- न्यूनतः त्रिंशत् (३०) सम्पर्ककक्षाः (Personal Contact Programme - PCP) अध्ययनकेन्द्रेषु भविष्यन्ति।
- भारांशः - सैद्धान्तिकः (Theory) शतं प्रतिशतम्।
- प्रायोगिकम् (Practical) - नास्ति।

## अङ्कविभाजनम्

अग्रे सारण्यां द्रष्टव्यम्

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

उच्चतरमाध्यमिककक्षायाः संस्कृतसाहित्यस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति। विवरणमधस्तादुपन्यस्यते।-

समग्रस्य पाठ्यविषयस्य भागाः प्रकल्पिताः सन्ति। प्रतिभागम् कति पाठाः, स्वाध्यायाय कति होराः, सैद्धान्तिकपरीक्षायाम् कियान् अंशः, प्रायोगिकपरीक्षायाम् कियान् अंशः, प्रत्यध्यायम् अङ्कविभाजनं चेति विषयाः अत्र प्रदीयन्ते।

## परिच्छेदः - १ कविपरिचयः (पाठाः १-३)

**अध्यायस्य औचित्यम्**

यैः कविभिः संस्कृतं रम्यं कृतं, काव्यावदानेन पोषितं तेषां देशकालकृति-विषये रसिकानां जिज्ञासा स्वाभाविकी एव। तदेवात्र किञ्चित् उपन्यस्यन्ते।

## परिच्छेदः - २ काव्याध्ययनम् - १ (पाठाः ४-११)

**अध्यायस्य औचित्यम्**

कविकुलगुरुः कालिदासः। तस्य श्रेष्ठा रचना रघुवंशम्। छात्राः कालिदासशैल्या रघुवंशं जानीयुः, तन्माध्यमेन काव्यरसास्वादं कुर्युः इति अत्र रघुवंशस्य प्रथमसंसर्गतः कश्चिदंशः अत्र उपादाय व्याख्यास्यते।

नैके काव्यस्य प्रकाराः। स्तोत्रं जनानां मनांसि रमयति। अतः बोधाय मोदाय च सुप्रसिद्धं स्तोत्रम् मोहमुद्गराख्यमत्र प्रदीयते। अम्बिकादासस्य गद्यकाव्यं शिवराजविजयः अति प्रसिद्धम्। तस्य अंशविशेषाः अत्र उपस्थाप्यन्ते।

## परिच्छेदः - ३ काव्याध्ययनम् - २ (पाठाः १२-१९)

**अध्यायस्य औचित्यम्**

उत्तररामचरितं नाम नाटकं भवभूतेः सर्वोत्कृष्टं दानं मन्यन्ते विद्वांसः। अत्र रामायणस्य उत्तरार्धं वर्णितम्। नाटकमिदं सप्ताङ्कात्मकं वर्तते। लङ्कायाः महारणे श्रीरामेण रावणं निहत्य सीता अशोकवनात् उद्धृता। ततः वनवासं समाप्य अयोध्यां प्रत्यागतः। ततः रामस्य राज्याभिषेकः सम्पन्नः। ततः आरभ्य सीतया सह विच्छेदः पुत्रयोः लवकुशयोः जन्म सीतया सह पुनर्मिलनपर्यन्तं नाटकमिदं परिव्याप्तम्। तस्य कश्चिदंशः अत्र उपस्थाप्यते।

बाणभट्टः गद्यकाव्यरचनायां पटुतमः। तस्य किमपि गद्यकाव्यं छात्रैरवश्यपठनीयमिति हेतोः कादम्बर्याः कथाभागस्य एकः अंशः शुकनासोपदेशः अत्र प्रतिपाद्यमानो विषयः। प्रभुत्वलाभे युकवस्य या विपत् सम्भवति तद्विषये शुकनासेन कृतः उपदेशोऽत्र मुख्योस्ति। केनापि युवकेन नूनमयं विषयोऽध्येतव्य इति प्रासङ्गिकता तस्य।

## परिच्छेदः - ४ काव्यदर्पणः (पाठाः २०-२७)

**अध्यायस्य औचित्यम्**

काव्यरचनाया विज्ञानमस्ति। काव्यनिर्माणे ये नियमा अवलम्बनीयाः, काव्याध्ययनेऽपि ये नियमा अवश्यं ज्ञातव्या ते सर्वेऽपि नियमा रीतयः पद्धतयः काव्यशास्त्रे आलोच्यन्ते। तेषु केचिद् प्राथमिकतया ज्ञातव्या विषया अस्मिन् विभागे अन्तर्भवन्ति। अलंकारशास्त्रमपि तत् कथ्यते। अत्र अलंकारिकाणां परिचयोऽपि दीयते। अलंकारः वृत्तिः छन्दः रस इत्येते मुख्या विषया अत्र चिताः सन्ति।

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

उच्चतरमाध्यमिककक्षायाः संस्कृतसाहित्यस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति -

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| १ | **प्रथमः परिच्छेदः** | **कविपरिचयः-** | २४ | ८ |
| | **पाठः - १** | कवीनां देशकालकृतिपरिचयः- वाल्मीकिः व्यासः भासः | | |
| | **पाठः - २** | कवीनां देशकालकृतिपरिचयः- कालिदासः भारविः अश्वघोषः | | |
| | **पाठः - ३** | कवीनां देशकालकृतिपरिचयः- श्रीहर्षः क्षेमेन्द्रः भवभूतिः कल्हणः शिवस्वामी | | |
| २ | **द्वितीयः परिच्छेदः** | **काव्याध्ययनम् - १-** | ६० | ३० |
| | **पाठः - ४** | रघुवंशम् (प्रथमसर्गः)- रघुवंशीयनृपाणां गुणवर्णनम् (१-१० श्लोकाः) | | |
| | **पाठः - ५** | रघुवंशम् (प्रथमसर्गः)- राज्ञो दिलीपस्य गुणवर्णनम् - १ (११-२३ श्लोकाः) | | |
| | **पाठः - ६** | रघुवंशम् (प्रथमसर्गः)- राज्ञो दिलीपस्य गुणवर्णनम् - २ (२४-३४ श्लोकाः) | | |
| | **पाठः - ७** | रघुवंशम् (प्रथमसर्गः)- वशिष्ठाश्रमं प्रति गमनम् (३५-४८ श्लोकाः) | | |
| | | **स्तोत्रादिसाहित्यम्-** | | |
| | **पाठः - ८** | स्तोत्रसाहित्यम् - - मोहमुद्गरः - अन्वयः व्याख्या, सरलार्थः, व्याकरणम् | | |
| | **पाठः - ९** | ऐतिहासिकम् अर्वाचीनं काव्यम्- - शिवराजविजयः - बटुसंवादः | | |
| | **पाठः - १०** | ऐतिहासिकम् अर्वाचीनं काव्यम्- - शिवराजविजयः - योगीराजसंवादः | | |
| | **पाठः - ११** | ऐतिहासिकम् अर्वाचीनं काव्यम्- - शिवराजविजयः - यवनदुराचारः | | |

| | | | | |
|---|---|---|---|---|
| ३ | तृतीयः परिच्छेदः | **काव्याध्ययनम् - २-** | ७० | ३० |
| | **पाठः - १२** | उत्तररामचरितम् (प्रथमोङ्कः)- श्लोकस्य अन्वयः, अन्वयार्थः, गद्यवाक्यानां सरलार्थः, प्रयोजने सति व्याकरणटिप्पणी विशेषटिप्पणी च | | |
| | **पाठः - १३** | उत्तररामचरितम् (प्रथमोङ्कः)- अष्टावक्रसंवादः | | |
| | **पाठः - १४** | उत्तररामचरितम् (प्रथमोङ्कः)- चित्रदर्शनम् - १ | | |
| | **पाठः - १५** | उत्तररामचरितम् (प्रथमोङ्कः)- चित्रदर्शनम् - २ | | |
| | **पाठः - १६** | कादम्बरी - शुकनासोपदेशः- यौवनस्वभावः - गद्यवाक्यानाम् अन्वयार्थः, सरलार्थः, व्याकरणटिप्पणी विशेषटिप्पणी च | | |
| | **पाठः - १७** | कादम्बरी - शुकनासोपदेशः लक्ष्माचापल्यम्- | | |
| | **पाठः - १८** | कादम्बरी - शुकनासोपदेशःलक्ष्मीदुष्प्रभावः-१- | | |
| | **पाठः - १९** | कादम्बरी - शुकनासोपदेशःलक्ष्मीदुष्प्रभावः-२- | | |
| ४ | चतुर्थः परिच्छेदः | **काव्यदर्पणः-** | ८६ | ३४ |
| | **पाठः - २०** | अलंकारिकपरम्परापरिचयः- भरतः भामहः, दण्डी, वामनः, रुद्रटः, अभिनवगुप्तः , कुन्तकः - तेषां दशकालकृतयः | | |
| | **पाठः - २१** | अलंकारिकपरम्परापरिचयः- आनन्दवर्धनः, अप्पय्यदीक्षितः, मम्मटः, भोजराजः, विश्वनाथः, जगन्नाथः - तेषां दशकालकृतयः | | |
| | **पाठः - २२** | वाच्य-लक्ष्य-व्यङ्ग्यानां सामान्यपरिचयः | | |
| | **पाठः - २३** | छन्दांसि- छन्दसां मात्रागणयतीनां परिचयः। छन्दोभेदाः। | | |
| | **पाठः - २४** | छन्दांसि- मात्रिकच्छन्दांसि, वार्णिकच्छन्दांसि च चितानि। - अनुष्टुभ् इद्रवज्रा वसन्ततिलका मालिनी शार्दूलविक्रीडितम् इत्यादीनां केषांचित् छन्दसां लक्षणम्, लक्षणस्य व्याख्या, उदाहरणश्लोके समन्वयः | | |
| | **पाठः - २५** | आलंकारपरियचः- अर्थालंकारः, शब्दालंकारः - सामान्यपरिचयः, अलंकारस्य प्रयोजनम्, लक्षणम्, लक्षणस्य बोधनम्, दृष्टान्तपुरःसरम् अन्वयः। केचित् मुख्यालंकाराः। | | |
| | **पाठः - २६** | आलंकारपरियचः- उपमा, रूपकम्, दृष्टान्तः, उत्प्रेक्षा इत्यादयः केचित् मुख्यालंकाराः | | |
| | **पाठः - २७** | रसपरिचयः- विभावादीनां परिचयः, सरस्वरूपपुरःसरं रसास्वादप्रकारः, रसभेदाः | | |

# प्रश्नपत्रस्य प्रारूपम्  (Question Paper Format)

विषयः - संस्कृतसाहित्यम् (३४८) (Sanskrit Sahitya) स्तरः- उच्चतरमाध्यमिककक्षा

परीक्षाकालावधिः (Time)- होरात्रयम् (३ hrs) पूर्णाङ्काः (Full Marks)- १००

## लक्ष्यानुसारि अङ्कविभाजनम्

| विषयाः | अङ्काः | प्रतिशतं योगः |
|---|---|---|
| ज्ञानम् (Knowledge) | २५ | २५% |
| अवबोधः (Understanding) | ४५ | ४५% |
| अनुप्रयोगकौशलम् (Application Skill) | ३० | ३०% |
| **महायोगः->** | **१००** | |

## प्रश्नप्रकारेण अङ्कभारविभाजनम्

| प्रश्नप्रकारः | प्रश्नसंख्या | अङ्काः | योगः |
|---|---|---|---|
| दीर्घोत्तरीयप्रश्नाः (LA) | ५ | ६ | ३० |
| लघूत्तरात्मकप्रश्नाः (SA) | १० | ४ | ४० |
| सुलघूत्तरीयप्रश्नाः (VSA) | १० | २ | २० |
| बहुविकल्पीयप्रश्नाः एकाङ्कप्रश्नाः स्तम्भमेलनं रिक्तस्थानपूर्तिः च | १० | १ | १० |
| **महायोगः->** | **३५** | | **१००** |

## पाठ्यविषयविभागानुसारि भारांशः

| विषयघटकाः | अङ्काः | स्वाध्यायाय होराः |
|---|---|---|
| १. कविपरिचयः | ८ | २४ |
| २. काव्याध्ययनम् - १ | २८ | ६० |
| ३. काव्याध्ययनम् - २ | ३० | ७० |
| ४. काव्यदर्पणः | ३४ | ८६ |
| **महायोगः ->** | **१००** | **२४०** |

## प्रश्नपत्रस्य काठिन्यस्तरः

| प्रश्नस्तरः | अङ्काः |
|---|---|
| कठिनः (Difficult) (मेधावी एव उत्तरदाने समर्थः) | २५ |
| मध्यमः (Medium) (नित्यं पठन् अध्यवसायी छात्रः उत्तरदाने समर्थः) | ५० |
| सरलः (Easy) (समग्रां पाठसामग्रीम् अल्पशः पठन् छात्रः उत्तरदाने समर्थः) | २५ |

# प्रश्नपत्रप्रतिमा

अस्मिन् प्रश्नपत्रे ... प्रश्नाः सन्ति। .... मुद्रितपुटानि च सन्ति।

| Roll No. अनुक्रमाङ्कः | ४ | ५ | ० | १ | ५ | ९ | १ | ८ | ३ | ० | ० | १ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|

Code No. गूढसंख्या **५५/SS/A/S**

SET स्तबकः **A**

# संस्कृतसाहित्यम्

## Sanskrit Sahitya

## (३४८)

Day and Date of Examination
परीक्षादिनं दिनाङ्कश्च ..... ______________________

Signature of two Invigilators
निरीक्षकयोः हस्ताक्षरम् १) ______________________

२) ______________________

## सामान्या निर्देशाः

१) अनुक्रमाङ्कः प्रश्नपत्रस्य प्रथमपुटे नूनं लेख्यः।

२) निरीक्ष्यताम् यत् प्रश्नपत्रस्य पुटसंख्या प्रश्नानां च संख्या प्रथमपुटस्य प्रारम्भे प्रदत्तसंख्या समाना न वा। प्रश्नक्रमः सम्यग् न वा।

३) वस्तुनिष्ठप्रश्ननाम् (क), (ख), (ग), (घ) एषु विकल्पेषु युक्तम् उत्तरं चित्वा उत्तरपत्रे लेख्यम्।

४) समेषां प्रश्नानाम् उत्तराणि निर्धारितसमये एव लेख्यानि।

५) उत्तरपत्रे आत्मपरिचयात्मकं लेखनम् अथवा निर्दिष्टस्थानं विहाय अन्यत्र क्वापि अनुक्रमाङ्कलेखनं सर्वथा वर्जितमस्ति।

६) स्वस्य उत्तरपत्रे प्रश्नपत्रस्य गूढसंख्या नूंन लेख्या।

७) समेषां प्रश्नानाम् उत्तराणि संस्कृतभाषया एव लेख्यानि।

# संस्कृतसाहित्यम् (Sanskrit Sahitya)

## (३४८)

**परीक्षासमयावधिः (Time) होरात्रयम् (३ Hrs)** **पूर्णाङ्काः (Full Marks) - १००**

**निर्देशाः -**

१) अस्मिन् प्रश्नपत्रे [A] भागे १०, [B] भागे १०, [C] भागे १०, [D] ५ इति आहत्य ३५ प्रश्नाः सन्ति।

२) प्रश्नस्य दक्षिणे पार्श्वे संख्यासु (अङ्काःx प्रश्नाः=पूर्णाङ्काः) इति एवम् अङ्कान् निर्दिशति।

३) समे प्रश्ना अनिवार्याः।

### [A] दशानां युक्तं विकल्पं चिनुत। १ x १०=१०

१) मायणे कति काण्डानि सन्ति।

(क) सप्त (ख) अष्टौ (ग) नव (घ) दश।

२) द्वादशपञ्जरिकास्तोत्रानुसारं मरणे सन्निहिते कः रक्षति।

(क) गोविन्दः (ख) शिवः (ग) ब्रह्मा (घ) कार्तिकः

३) अरुण एष प्रकाशः इति कस्मिन् काव्ये अस्ति।

(क) शिवराजविजयः (ख) किरातार्जुनीयम् (ग) मेघदूतम् (घ) अभिज्ञानशाकुन्तलम्

४) दाक्षिणात्यकेशरी कः।

(क) शिवराजः (ख) गौरसिंहः (ग) अफजलखानः (घ) श्यामवटुः

५) लक्ष्मीः कं दुःस्वप्नमिव न स्मरति।

(क) दातारम् (ख) सूजनम् (ग) शूरम् (घ) सरस्वतीपरिगृहीतम्

६) लौकिकं छन्दः कतिविधम् अस्ति।

(क) द्विविधम् (ख) त्रिविधम् (ग) चतुर्विधम् (घ) पञ्चविधम्।

७) स च नित्यं प्रशान्तात्मा इत्यादिश्लोकः कस्मिन् स्तोत्रे अस्ति।

(क) द्वादशपञ्जरिका (ख) श्रीरामगुणवर्णना (ग) शिवताण्डवस्तोत्रम् (घ) अच्युताष्टकम्

८) वृत्तं कतिविधं वर्तते।

(क) द्विविधम् (ख) त्रिविधम् (ग) चतुर्विधम् (घ) पञ्चविधम्।

९) भासस्य का कृतिः वर्तते।

(क) रामायणम् (ख) महाभारतम् (ग) स्वप्नवासवदत्तम् (घ) उत्तररामचरितम्।

१०) रामलक्ष्मणयोः जटाबन्धं कुत्र जातम्।

(क) अयोध्यायाम् (ख) किष्किन्धायाम् (ग) जनस्थाननामकारण्ये (घ) शृङ्गवेरपुरे

### [B] दशानां यथानिर्देशम् उत्तराणि लिखत। २ x १०=२०

१) अलङ्कारशब्दस्य करणपक्षे व्युत्पत्तिः का। अलङ्कारशब्दस्य भावपक्षे व्युत्पत्तिः का। १+१=२

२) कादम्बरीं कः रचितवान्। कादम्बरी कथा उत आख्यायिका। १+१=२

३) भामहः कं ग्रन्थं लिखितवान्। कस्य सम्प्रदायस्य प्रवर्त्तकः अस्ति। १+१=२

४) वामनः कुत्रत्यः। वामनस्य कालः कः। १+१=२

५) अलङ्कारः कतिविधः भवति। ते च के। १+१=२

६) भरतः कं ग्रन्थं लिखितवान्। कस्य सम्प्रदायस्य प्रवर्त्तकः अस्ति। १+१=२

७) अलङ्कारसम्प्रदायस्य प्रवर्त्तकः कः। तस्य मते काव्यस्य आत्मा कः। १+१=२

८) सन्निहिते मरणे किन्न रक्षति। केन चित्तं विनोदनीयम्। १+१=२

९) सूर्यः किम् समुद्धूय कस्मै निवेदयितुं च अस्तं गतः। १+१=२

१०) अलङ्कारः काव्यस्य स्थिरधर्मः अस्ति न वा। अलङ्कारः काव्यस्य किं वर्धयति। १+१=२

### [C] दश अनतिदीर्घोत्तरैः समाधत्त। ४ x १०=४०

१) किं महत् अवधानम्। जीवनं कीदृशम् इति साकल्येन वर्णयत।

२) श्रीरामस्य गुणान् स्वभाषया प्रकटय्य तस्य राज्यकौशलं वर्णयत।

३) महमदस्य अधमताम् वर्णयित्वा दक्षिणदेशं वर्णयत।

४) रामः कथं लोकनिन्दां कृतवान् अथवा प्रस्रवणगिरेः यथाग्रन्थं वर्णनं कुरुत।

५) धनातिशयः कुतो न शोभते। अथवा मुनयः विन्ध्यारण्ये जीवनं कथं यापयन्ति स्म।

६) अलसलुलित... इति प्रतीकोद्धृतं श्लोकम् सम्पूर्णम् उद्धृत्य व्याख्यात। अथवा सीताया आजीवनपवित्रताविषये श्रीरामेण किमुक्तम्।

७) श्रियो दुश्चरितं वर्ण्यताम्। अथवा कुतः अयं गुरूपदेशः अनन्यः।

८) समवृत्तम् अथवा विषमवृत्तम् अवलम्ब्य एकं लघुप्रबन्धं लिखत।

९) मात्रिकच्छन्दः अथवा वार्णिकच्छन्दः अवलम्ब्य लघुप्रबन्धं लिखत।

१०) वंशस्थतोटकयोः एकस्य च्छन्दसः लक्षणम् उक्त्वा उदाहरणे लक्षणसमन्वयः कार्यः।

### [D] पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०

१) शिववीरगौरसिंहयोः आलापं वर्णयत। तौ महान्तौ धर्मस्य कृते किं किं कष्टं सहेते स्म। अथवा श्रीरामस्य गुणान् वर्णयित्वा राज्यचालनकौशलं वर्णयत।

२) आज्ञा गुरूणां ह्यविचारणीया इति सूक्तिं समर्थयत। अथवा भवभूतिं परिचाययत।

३) सीतया कृतं रामवर्णनं यथामति उपस्थापयत। अथवा उत्तररमाचरितस्य मङ्गलश्लोकं व्याख्यात।

४) उपमाम् अथवा अतिशयोक्तिम् अलङ्कारं वर्णयत।

५) रूपकम् अथवा समासोक्तिम् अलङ्कारं वर्णयत।

--)(O)(--

# प्रश्नपत्रप्रतिमाया उत्तरमाला

[A] दशानां युक्तः विकल्पः। १ x १०=१०

१-(क), २-(क), ३-(क), ४-(क), ५-(क), ६-(क), ७-(ख), ८-(ख), ९-(ग), १०-(घ)

[B] दशानां यथानिर्देशम् उत्तराणि। २ x १०=२०

१) अलङ्क्रियते अनेन इति अलङ्कारः इति करणपक्षे व्युत्पत्तिः। अलङ्कृतिः अलङ्कारः इति भावपक्षे व्युत्पत्तिः।१+१=२
२) कादम्बरीं बाणभट्टः रचितवान्। कादम्बरी कथा अस्ति। १+१=२
३) काव्यालङ्कारः, अलङ्कारसम्प्रदायस्य। १+१=२
४) काश्मीरीयः, अष्टमशतकोत्पन्नः। १+१=२
५) त्रिविधः। शब्दालङ्कारः, अर्थालङ्कारः, शब्दार्थालङ्कारः। १+१=२
६) नाट्यशास्त्रम्, रससम्प्रदायस्य। १+१=२
७) भामहः। अलङ्कारः। १+१=२
८) सन्निहिते मरणे डुकृञ् करणे इत्यादिव्याकरणशास्त्रादिकं न रक्षति।
स्वकर्मणा उपार्जितेन धनेन चित्तं विनोदनीयम्। १+१=२
९) सूर्यः पूर्वदिशं समुद्भूय विष्णवे निवेदयितुं च अस्तं गतः। १+१=२
१०) स्थिरधर्मः न भवति। शोभाम् वर्धयति। १+१=२

[C] दश अनतिदीर्घोत्तरैः समाधत्त। ४ x १०=४०

१) पाठः- ८ द्रष्टव्यः
२) पाठः- ८ द्रष्टव्यः
३) पाठः- ९ द्रष्टव्यः
४) पाठः- ११ / १२ द्रष्टव्यः
५) पाठः- १३ / १२ द्रष्टव्यः
६) पाठः- १२ / १० द्रष्टव्यः
७) पाठः- १४ / १३ द्रष्टव्यः
८) पाठः- २२.४.१ / २२.४.३ द्रष्टव्यः
९) पाठः- २३.१ / २२ द्रष्टव्यः
१०) बिन्दुः- २३.२.५ / २३.२.६ द्रष्टव्यः

[D] पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०

१) पाठः- ९ / ८ द्रष्टव्यः
२) पाठः- १३ / १० द्रष्टव्यः
३) पाठः- ११ / १० द्रष्टव्यः
४) बिन्दुः- २५.२ / २५.९ द्रष्टव्यः
५) बिन्दुः- २५.४ / २५.८ द्रष्टव्यः

--)(O)(--